Sheth Devchand Lalbhai Jain Pustakoddhar Fund Series. No. 57.

## FOREWORD.

This is the 57th volume of the series that we have been sending forward. In issuing it to the public we have to put on record the great loss that we have suffered in the death of two of our earnest workers and sympathisers. The first of them to whom we would refer is Muni Mahârâj **Punnyâs Shree Mani Vijayajee.** And the second is **Sheth Naginbhâi Ghelâbhâi Javeri.** The former succumbed to a disease after a very short illness. He was the most energetic and devoted guide of ours in our task. The latter died at the age of 45. He was the chief Trustee of this Fund. Both have been victims of premature and early death. All the 56 volumes of this series were issued during the period when **Sheth Naginbhâi** was a trustee. He died in Bombay on the 20th of November 1921, as a consequence of his death the responsibility of publication has fallen on us.

In conclusion we take *leave to* tender our heart-felt thanks to Shreemân Âgamoddhâraka Vyâkhyâpragna Âchârya Mahârâj **Shree Ânanda Sâgar Sûri** for the kind and valuable help rendered by him in editing this volume called **"Shree Sûkta-Muktâvalee."** *It is* an original work written by some **Âchârya** (पूर्वाचार्य) of old. And the Jain public ought to be thankful to Shreemân **Ânanda Sâgar Sûri** to have *made it accessible* to the community.

Râma Nawami, Vikram Year 1978
*Bombay, 6th April 1922*

JIVANCHAND SAKERCHAND JAVERI,
A Trustee for himself & Co-Trustees.





# श्रेष्ठी देवचंद लालभाई जह्वेरी.

| | |
|---|---|
| जन्म १९०९ वैक्रमाब्दे | निर्याणम् १९६२ वैक्रमाब्दे |
| कार्तिकशुक्लैकादश्यां, सूर्यपूरे | पौषकृष्णतृतीयायाम्, मुम्बय्याम्. |

**The Late Sheth Devchand Lalbhai Javeri.**

**Born 1853 A. D Surat.** **Died 13th January 1906 A D. Bombay,**

10000-1-21.

श्रेष्ठि देवचन्द्र लालभाई-जैनपुस्तकोद्धार-ग्रन्थाङ्के-

श्रीवीराय नमः

श्रीमत्प्राचीनाचार्यकृता-

# श्रीसूक्तमुक्तावली ।



## धर्मोपदेशसूक्तानि १

वीरं विश्वगुरुं नत्वा, कृत्वा यत्नेन संग्रहम् । सदोपकारिसूक्ताली, स्वान्यपाठाय लिख्यते ॥ १ ॥ पूज्यपूजा दया दानं, तीर्थयात्रा जपस्तपः । श्रुतं परोपकारश्च, मर्त्यजन्मफलाष्टकम् ॥ २ ॥ शिष्टे सङ्गः श्रुतौ रङ्गः, सद्ध्याने धीर्धृतौ मतिः । दाने शक्तिर्गुरौ भक्तिः, षडेते सुकृताकराः ॥ ३ ॥ देवपूजा गुरूपास्तिः, स्वाध्यायः संयमस्तपः । दानं चेति गृहस्थानां, षट् कर्माणि दिने दिने ॥ ४ ॥ जिनपूजनं विवेकः सत्यं शौचं सुपात्रदानं च । महिमक्रीडागारः शृङ्गारः श्रावकत्वस्य ॥ ५ ॥ यद्भक्तिः सर्वज्ञे यद्यत्नस्तत्प्रणीतसिद्धान्ते । यत्पूजनं यतीनां फलमेतज्जीवितव्यस्य ॥ ६ ॥ दानं सुपात्रे विशदं

1 सुध्याने प्र०

च शीलं, तपो विचित्रं शुभभावना च। भवार्णवोत्तारणसत्तरण्डं, धर्मं चतुर्धा मुनयो वदन्ति ॥ ७ ॥ श्रीमज्जिनेशनमनं तिलकत्यलीके, वक्षःस्थले विमलमालति सद्विवेकः। ताडङ्कति श्रवणयोः सुगुरूपदेशस्त्यागस्तु कङ्कणति पाणितले सतां हि ॥ ८ ॥ जैनो धर्मः प्रकटविभवः संगतिः साधुलोके, विद्वद्गोष्ठी वचनपटुता कौशलं सत्क्रियासु। साध्वी लक्ष्मीश्चरणकमलोपासना सद्गुरूणां, शुद्धं शीलं मतिरमलिना प्राप्यते भाग्यवद्भिः ॥ ९ ॥ जिनभवनं जिनबिम्बं जिनपूजां जिनमतं च यः कुर्यात्। तस्य नरामरशिवसुखफलानि करपल्लवस्थानि ॥ १० ॥ वरपूजया जिनानां धर्मश्रवणेन सुगुरुसेवनया। शासनभासनयोगैः सृजन्ति सफलं निजं जन्म ॥ ११ ॥ दानं वित्ताद्दतं वाचः, कीर्त्तिधर्मौ तथाऽऽयुषः। परोपकरणं कायादसारात्सारमुद्धरेत् ॥ १२ ॥ बुद्धेः फलं तत्त्वविचारणं च, देहस्य सारं व्रतधारणं च। अर्थस्य सारं किल पात्रदानं, वाचः फलं प्रीतिकरं नराणाम् ॥ १३ ॥ जिनेन्द्रपूजा गुरुपर्युपास्तिः, सत्त्वानुकम्पा शुभपात्रदानम्। गुणानुरागः श्रुतिरागमस्य, नृजन्मवृक्षस्य फलान्यमूनि ॥ १४ ॥ त्याज्या हिंसा नरकपदवी नानृतं भाषणीयं, स्तेयं हेयं सुरतविरतिः सर्वसङ्गान्निवृत्तिः। जैनो धर्मो यदि न रुचितः पापपङ्कावृतेभ्यः, सर्पिर्दुष्टं किमिदमियता यत्प्रमेही न भुङ्क्ते ॥ १५ ॥ करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणमनं, मुखे सत्या वाणी श्रुतमवितथं च श्रवणयोः। हृदि स्वच्छा वृत्तिर्विजयि भुजयोः पौरुषमहो, विनाऽप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ १६ ॥ पिता योगाभ्यासो विषयविरतिः सा च जननी, विवेकः सौन्दर्यं प्रतिदिनमनीहा च भगिनी। प्रिया क्षान्तिः पुत्रो विनय उपकारः प्रियसुहृत्, सहायो वै-

१ यानपात्रं प्र०

राग्यं गृहमुपशमो यस्य स सुखी ॥ १७ ॥ धैर्यं यस्य पिता क्षमा च जननी भ्राता मनःसंयमः, सूनुः सत्यमिदं दया च
दुहिता शान्तिः स्वयं गेहिनी । शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनं, यस्यैतानि कुटुम्बिनो वद सखे!
तस्याङ्गिनः क्वासुखम्? ॥ १८ ॥ यत्संतोषसुखं यदिन्द्रियदमो यच्चेतसः शान्तता, यद्दीनेषु दयालुता यदपि गीः सत्या-
मृतास्यन्दिनी । शौर्यं धैर्यमनार्यसङ्गविरतिर्या सङ्गतिः सज्जने, एते ते परिणामसुन्दरतराः सर्वे विवेकाङ्कुराः ॥ १९ ॥
त्रिसन्ध्यं देवार्चां विरचय चयं प्रापय यशः, श्रियः पात्रे वापं जनय नयमार्गं नय मनः । स्मरक्रोधाद्यारीन् दलय कलय
प्राणिषु दयां, जिनोक्तं सिद्धान्तं शृणु वृणु जवान्मुक्तिकमलाम् ॥ २० ॥ दिने दिने मंजुलमंगलाली, सुसंपदः सौख्यप-
रम्परा च । इष्टार्थसिद्धिर्बहुला च बुद्धिः, सर्वत्र सिद्धिः सृजतां सुधर्मम् ॥ २१ ॥ धर्मसिद्धौ ध्रुवं सिद्धिर्द्युम्नप्रद्युम्नयो-
रपि । दुग्धोपलम्भे सुलभा, संपत्तिर्दधिसर्पिषोः ॥ २२ ॥ जीवदया जिणधम्मो सावयजम्मो गुरूण पयभत्ती । एअं
रयणचउक्कं पुण्णेहिँ विणा न पावंति ॥ २३ ॥ जं अप्पह न सुहायई, तं पुण परह न वंछिअई । धंमह एहज मूलु,
काहुं वलि वलि पुच्छिअई? ॥ २४ ॥ पूजामाचरतां जगत्त्रयपतेः सङ्घार्चनं कुर्वतां, तीर्थानामभिवन्दनं विदधतां जैनं वचः
शृण्वताम् । सद्दानं ददतां तपश्च चरतां सत्त्वानुकम्पाकृतां, येषां यान्ति दिनानि जन्म सफलं तेषां सुपुण्यात्मनाम्
॥ २५ ॥ देवं पूजयतो दयां विदधतः सत्यं वचो जल्पतः, सद्भिः संगमनुज्झतो वितरतो दानं मदं मुञ्चतः । यस्येत्थं

---

१ जीवदया जिनधर्मः, श्रावकजन्म गुरूणां पदभक्तिः । एतद् रत्नचतुष्कं, पुण्यैर्विना न प्राप्नुवन्ति ॥ २३ ॥ यत् आत्मनः न सुखयति, तत्पुनः परस्मै न वाञ्छ्यते । धर्मस्य एतद् मूलं, किं पुनः पुनः पृच्छ्यते? ॥ २४ ॥

पुरुषस्य यान्ति दिवसास्तस्यैव मन्यामहे, गोत्रं जन्म च जीवितं च सफलं श्लाघ्या कथा वाग्मिता ॥ २६ ॥ कर्त्तव्यं जिनवन्दनं विधिपरैर्हर्षोल्लसन्मानसैः, सच्चारित्रविभूषिताः प्रतिदिनं सेव्याः सदा साधवः । श्रोतव्यं च दिने दिने जिनवचो मिथ्यात्वनिर्णाशनं, दानादौ व्रतपालने च सततं कार्या रतिः श्रावकैः ॥ २७ ॥ वन्द्यास्तीर्थकृतः सुरेन्द्रमहिताः पूजां विधायामलां, सेव्याः सन्मुनयश्च पूज्यचरणाः श्राव्यं च जैनं वचः। सच्छीलं परिपालनीयमतुलं कार्यं तपो निर्मलं, ध्येया पञ्चनमस्कृतिश्च सततं भाव्या च सद्भावना ॥ २८ ॥ देवं श्रेणिकवत्प्रपूजय गुरुं वन्दस्व गोविन्दवद्दानं शीलतपःप्रसङ्गसुभगां चाभ्यस्य सद्भावनाम् । श्रेयांसश्च सुदर्शनश्च भगवानाद्यः स चक्री यथा, धर्म्ये कर्मणि कामदेववदहो चेतश्चिरं स्थापय ॥ २९ ॥ जन्तूनामवनं जिनेशमहनं भक्त्यागमाऽऽकर्णनं, साधूनां नमनं मदापनयनं सम्यग्गुरोर्माननम् । मायाया हननं क्रुधश्च शमनं लोभद्रुमोन्मूलनं, चेतःशोधनमिन्द्रियाश्वदमनं यत्तत् शिवोपायनं ॥ ३० ॥ सर्वज्ञो हृदि वाचि तद्गुणगणः कायेन देशव्रतं, धर्मे तत्परता परः परिणतो बोधो बुधश्लाघ्यता । प्रीतिः साधुषु वन्धुता बुधजने जैने रतिः शासने, यस्यैवं भवभेदको गुणगणः स श्रावकः पुण्यभाक् ॥ ३१ ॥ त्रैकाल्यं जिनपूजनं प्रतिदिनं सङ्घस्य सन्माननं, स्वाध्यायो गुरुसेवनं च विधिना दानं तथाऽऽवश्यकम् । शक्त्या च व्रतपालनं वरतपो ज्ञानस्य पाठस्तथा, सैष श्रावकपुङ्गवस्य कथितो धर्मो जिनेन्द्रागमे ॥ ३२ ॥ लक्ष्मीर्दानविवेकसंगममयी श्रद्धामयं मानसं, धर्मः शीलदयामयः सुचरितश्रेणीमयं जीवितम् । वुद्धिः शास्त्रमयी सुधारसमयं वाग्वैभवोज्जृम्भितं, व्यापारश्च परार्थनिर्मितिमयः पुण्यैः परं प्राप्यते ॥ ३३ ॥ सद्व्यायोपात्तवित्तप्रचयसफलताहेतु दानं सुपात्रे, देयं शुद्धं च शीलं सकलभयहरं पालनीयं

भवद्भिः । वज्रं दुष्कर्मशैलप्रचयविदलने सत्तपःकर्म कार्यं, सर्वानुष्ठानसारं भवभयमथना भावना भावनीया ॥ ३४ ॥ वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता, विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् । भक्तिश्चार्हति शक्तिरात्मदमने संसर्गमुक्तिः खले, येष्वेते निवसन्ति निर्मलगुणास्तैरेव भूर्भूषिता ॥ ३५ ॥ हस्तो दानविधौ मनो जिनमते वाचः सदा सूनृते, प्राणाः सर्वजनोपकारकरणे वित्तानि चैत्योत्सवे । येनैवं विनियोजितानि शतशो विश्वत्रयीमण्डनं, धन्यः कोऽपि स विष्टपैकतिलकं काले कलौ श्रावकः ॥ ३६ ॥ निद्रान्ते परमेष्ठिसंस्मृतिरथो देवार्चनाव्यापृतिः, साधुभ्यः प्रणतिः प्रमादविरतिः सिद्धान्ततत्त्वश्रुतिः । सर्वस्योपकृतिः शुचिव्यवहृतिः सत्पात्रदाने रतिः, श्रेयोनिर्मलधर्मकर्मनिरतिः श्लाघ्या नराणां स्थितिः ॥ ३७ ॥ कृत्वाऽर्हत्पदपूजनं यतिजनं नत्वा विदित्वाऽऽगमं, हित्वा संगमधर्मकर्मठधियां पात्रेषु दत्त्वा धनम् । गत्वा पद्धतिमुत्तमक्रमजुषां जित्वाऽन्तरारिव्रजं, स्मृत्वा पञ्चनमस्क्रियां कुरु करक्रोडस्थमिष्टं सुखम् ॥३८॥ उत्पत्तिर्विमले कुले यतिजने सङ्गो जिनेन्द्रे परा, भक्तिर्दानमतिर्निदानरहिता वैराग्यबुद्धिर्भवे । सर्वत्रोचितकारिता गुणवतामेकान्तपक्षग्रहः, कुग्राहे विफला क्रिया सुकृतिनः कस्यापि संपद्यते ॥ ३९ ॥ उत्पत्तिः सत्कुलादौ प्रकृतिकरुणया व्याकुला चित्तवृत्तिर्व्यावृत्तिः पापयोगात्तदनु गुणकरः साधुसङ्गानुरागः । संसारारण्यभीतिर्गुरुशरणतया कर्मनिर्मूलनेच्छा, प्राग्जन्मोपात्तपुण्यैरिह भवति नृणां सर्वसामग्रिकेयम् ॥ ४० ॥ भक्तिः श्रीवीतरागे भगवति करुणा प्राणिवर्गे समग्रे, दीनादिभ्यः प्रदानं श्रवणमनुदिनं श्रद्धया सुश्रुतीनाम् । पापापोहे समीहा भवभयमसमं मुक्तिमार्गानुरागः, सङ्गो निःसङ्गचित्तैर्विषयविमुखता हर्म्यिणामेष धर्मः ॥ ४१ ॥ कर्त्तव्या देवपूजा शुभगुरुवचनं नित्यमाकर्णनीयं, दानं देयं सु-

पात्रे प्रतिदिनममलं पालनीयं च शीलम् । तप्यं शुद्धं स्वशक्त्या तप इह महती भावना भावनीया, श्राद्धानामेष धर्मो जिनपतिगदितः पूतनिर्वाणमार्गः ॥ ४२ ॥ सर्वज्ञार्चाऽनुरक्तिर्विपुलतरधिया तीर्थयात्रानुपक्तिः, पापादाने विरक्तिर्मुनिवरचरणाराधनेऽगाधभक्तिः । दानासक्तिः समग्राऽऽग्रहविरतिरतिर्धर्मकर्मप्रसक्तिः, केषाञ्चित्पुण्ययोगाद्भवति यदि परं प्राणिनां प्राप्तिरेषा ॥ ४३ ॥ पूआ जिणिंदे सुरुई वएसु, जत्तो अ सामाइअपोसहेसुं । दाणं सुपत्ते सयणं सुतित्थे, सुसाहुसेवा सिवलोअमग्गो ॥ ४४ ॥ जिणाणं पूअजत्ताए, साहूणं पज्जुवासणे । आवस्सयंमि सज्झाए, उज्जमेह दिणे दिणे ॥ ४५ ॥ जत्थ य विसयविराओ कसायचाओ गुणेसु अणुराओ । किरिआसु अप्पमाओ सो धम्मो सिवसुहोवाओ ॥ ४६ ॥ जाएण जीवलोए दो चेव नरेण सिक्खिअव्वाइं । कम्मेण जेण जीवइ जेण मओ सुगइं जाइ ॥ ४७ ॥ नाणं नियमग्गहणं नवकारो नयरुई अणीहा य । पंचनयभूसिआणं न दुलहा सुग्गई होइ ॥ ४८ ॥ पच्चक्खाणं पूआ पडिक्कमणं पोसहो परुवयारो । पंच पयारा जस्स उ न पयारो तस्स संसारो ॥ ४९ ॥ तित्थेसराणं बहुमाणभत्ती, सत्तीइ सत्ताण दया विरागो । समाणधम्माण य वच्छलत्तं, जिणागमे सारमुदाहरन्ति ॥ ५० ॥

१ पूजा जिनेन्द्रे सुरुचिः व्रतेषु, यत्नश्च सामायिकपौषधेषु । दानं सुपात्रे श्रयणं सुतीर्थे, सुसाधुसेवा शिवलोकमार्गः ॥ ४४ ॥ जिनानां पूजायात्रयोः, साधूनां पर्युपासने । आवश्यके स्वाध्याये, उद्यच्छस्व दिने दिने ॥ ४५ ॥ यत्र च विषयविरागः, कषायत्यागः गुणेषु अनुरागः । क्रियासु अप्रमादः, स धर्मः शिवसुखोपायः ॥४६॥ जातेन जीवलोके, द्वे चैव नरेण शिक्षितव्ये । कर्मणा येन जीवति, येन मृतः सुगतिं याति ॥४७॥ ज्ञानं नियमग्रहणं, नवकारः नयरुचिश्च अनीप्सा च । पञ्च नकारविभूषितानां, न दुर्लभा सुगतिर्भवति ॥४८॥ प्रत्याख्यानं पूजा, प्रतिक्रमणं पौषधः परोपकारः । पञ्चसु येषु यस्य तु प्रचारः न प्रचारः तस्य संसारः ॥ ४९ ॥ तीर्थेश्वराणां बहुमानभक्ती, शक्त्या सत्त्वानां दया विरागः । समानधर्माणां च वात्सल्यं, जिनागमे सारं उदाहरन्ति ॥५०॥

बीआ पंचमि अट्ठमि एगादसि चउदसी पण तिहिओ। एआउ सुअतिहीउ गोअमगणहारिणा भणिआ ॥ १ ॥ बीआ दुविहे धम्मे पंचमि नाणे अ अट्ठमी कम्मे । एगारसि अंगाणं चउद्दसी चउदपुव्वीणं ॥ २ ॥ अष्टमी अष्टकर्मान्ता, सिद्धिलाभा चतुर्दशी । पञ्चमी केवलज्ञानं, तस्मात्रितयमाचरेत् ॥ ३ ॥ उदयंमि जा तिही सा पमाणमिअरीइ कीरमाणीए । आणाभंगऽणवत्था मिच्छत्तविराहणं चेव ॥ ४ ॥ सामायिकावश्यकपौपधानि, देवार्चनस्नानविलेपनानि । ब्रह्मक्रियादानदयामुखानि, भव्याश्चतुर्मासकमण्डनानि ॥ ५ ॥ व्याख्यानश्रवणं जिनालयगतिर्नित्यं गुरोर्वन्दनं, प्रत्याख्यानविधानमागमगिरां चित्ते चिरं स्थापनम् । कल्पाकर्णनमात्मशक्तितपसा संवत्सराराधनं, श्राद्धैः श्लाघ्यतपोधनादिति फलं लभ्यं चतुर्मासके ॥ ६ ॥ यज्जीवस्योपकारि स्यात्तद्देहस्यापकारकृत् । यच्छरीरोपकारि स्यात्तज्जीवस्यापकारकृत् ॥ ७ ॥ मन्त्राणां परमेष्ठिमन्त्रमहिमा तीर्थेषु शत्रुञ्जयो, दाने प्राणिदया गुणेषु विनयो ब्रह्म व्रतेषु व्रतम् । संतोषो नियमे तपस्सु च शमस्तत्त्वेषु सद्दर्शनं, सर्वज्ञोदितसर्वपर्वसु परं स्याद्वार्षिकं पर्व च ॥ ८ ॥ वृक्षेषु कल्पविटपी मनुजेषु चक्री, शैलेषु काञ्चनगिरिस्त्रिदशेषु शक्रः । संजीवनेषु जलदः सुभगेषु लक्ष्मीः, कृत्येषु धर्ममयकृत्यमपि प्रधानम्

---

१ द्वितीया पञ्चमी अष्टमी, एकादशी चतुर्दशी पञ्च तिथयः । एताः श्रुततिथयः, गौतमगणधरेण भणिताः ॥ १ ॥ द्वितीया द्विविधे धर्मे पञ्चमी ज्ञाने च अष्टमी कर्मणि । एकादशी अङ्गानां चतुर्दशी चतुर्दशपूर्वाणाम् ॥ २ ॥ २ उदये या तिथिः सा प्रमाणमितरस्यां क्रियमाणायाम् । आज्ञाभङ्गानवस्थामिथ्यात्वविराधनाश्चैव ॥ ४ ॥

॥९॥ देवार्चनादिविधिना गुरुवन्दनेन, सम्यक्तपोभिरसमैः समयामृतेन। आलोचनाप्रभृतिभिश्च शुभक्रियाभिः, संवत्सरप्रभृति पर्व कृतार्थयन्ति ॥ १० ॥ [ पृथ्वीनाथसुता भुजिष्यचरिता जञ्जीरिता मुण्डिता, क्षुत्क्षामा रुदती विधाय पदयोरन्तर्गतां देहलीम्। कुल्माषान् प्रहरद्वयव्यपगमे मे सूर्पकोणस्थितान्, दद्यात्पारणकं तदा भगवतः सोऽयं महाभिग्रहः ॥ ११ ॥ ] सावद्यं दलयत्यलं प्रथयते सम्यक्त्वशुद्धिं परां, नीचैर्गोत्रमधः करोति कुगतेश्छिद्रं पिधत्ते क्षणात्। सद्ध्यानं धिनुते निकृन्तति ततं तृष्णालतामण्डपं, वश्यं सिद्धिसुखं करोति भविनामावश्यकं निर्मितम् ॥ १२ ॥ आवसयमुभयकालं ओसहमिव जे कुणंति उज्जुत्ता। जिणविज्जकहिअविहिणा अकम्मरोगा य ते हुंति ॥ १३ ॥ मिच्छत्ताइ न गच्छइ न (य) गच्छावेइ नाणुजाणेइ। जं मणवयकाएहिं तं भणिअं भावपडिकमणं ॥ १४ ॥ सामाइयं कुणंतो समभावं सावओ घडिअदुगं। आउं सुरेसु बंधइ इत्तिअमित्ताइँ पलिआइं ॥ १५ ॥ बाणवई कोडीओ लक्खा गुणसट्ठि सहस पणवीसं। नवसयपणवीसाए सतिहा अडभागपलिअस्स ॥ १६ ॥ सतहत्तरि सत्तसया सतहत्तरि सहस लक्खकोडीओ। सगवीसं कोडिसया नवभागा सत्तपलिअस्स ॥ १७ ॥ अंकतः ९२५९२५९२५⅜। २७७७७७७७७७¹⁄₉

१ आवश्यकमुभयकालमौषधमिव ये कुर्वन्ति उद्युक्ताः। जिनवैद्यकथितविधिना अकर्मरोगाश्च ते भवन्ति ॥ १३ ॥ मिथ्यात्वादि न गच्छति न गमयति नानुजानाति। यत् मनोवच कायैः तद् भणितं भावप्रतिक्रमणम् ॥ १४ ॥ सामायिकं कुर्वन् समभावं श्रावकः घटिकाद्विकम्। आयुः सुरेषु बध्नाति इयन्मात्राणि पल्यानि ॥ १५ ॥ द्विनवतिः कोट्यः लक्षाः एकोनषष्टिः सहस्राणि पञ्चविंशतिः। नव शतानि पञ्चविंशतिः सप्त अष्टभागपल्यस्य ॥ १६ ॥ सप्तसप्ततिः सप्त शतानि सप्तसप्ततिः सहस्राणि लक्षाः कोट्यः। सप्तविंशतिः कोटीशतानि नवभागा. सप्तपल्यस्य ॥ १७ ॥

## धन्यसूक्तानि ३

भवेद्धन्यस्य कस्यचित् ॥ १ ॥ लक्ष्मीर्विवेकेन
लक्ष्मीः परोपकाराय, विवेकाय सरस्वती । संततिः परलोकाय, भवेद्धन्यस्य कस्यचित् ॥ १ ॥ लक्ष्मीर्विवेकेन मतिः श्रुतेन, शक्तिः शमेन प्रभुता नयेन । श्रद्धा च धर्मेण समं समेत्य, धन्यस्य पुंसः सफलीभवन्ति ॥ २ ॥ विहिजोगो विहिपक्खाराहगा सया धन्ना । विहिबहुमाणी धन्ना विहिपक्खअदूसगा धन्ना ॥ ३ ॥ आसन्नसिद्धिआणं विहिबहुमाणो अ होइ कायव्वो । विहिचाओ अविहिभत्ती अभव्वजिअदूरभव्वाणं ॥ ४ ॥ धन्यानामिह धर्मकर्मविषया वाञ्छाऽपि संजायते, धन्यानामिह तत्प्रवृत्तिरचना केषाञ्चिदेवोद्भवेत् । धन्यास्तस्य च यान्ति पारमथवा धन्याः प्रशंसन्ति ये, धन्यास्तेऽपि च येऽन्यलोकविहितं धर्मं न निन्दन्ति ये ॥ ५ ॥ धन्या भारतवर्षसंभविजना येऽद्यापि काले कलौ, निस्तीर्थेश्वरकेवले निरवधौ नश्यन्मनःपर्यये । त्रुट्यत्सूत्रविशेषसंपदि भवद्दौर्गत्यदुःखापदि, श्रीजैनेन्द्रवचोऽनुरागवशतः कुर्वन्ति धर्मोद्यमम् ॥ ६ ॥

## धर्मफलसूक्तानि ४

धरान्तःस्थं तरोर्मूलमुच्छ्रयेणानुमीयते । तथा पूर्वकृतो धर्मोऽप्यनुमीयेत संपदा ॥ १ ॥ राज्यं सुसंपदो भोगा

---

१ धन्यानां विधियोगः विधिपक्षाराधकाः सदा धन्याः । विधिबहुमानिनः धन्या विधिपक्षादूषकाः धन्याः ॥ ३ ॥ आसन्नसिद्धिकानां विधिबहुमानश्च भवति कर्तव्यः । विधित्यागः अविधिभक्तिः अभव्यजीवदूरभव्यानाम् ॥ ४ ॥

कुले जन्म सुरूपता । पाण्डित्यमायुरारोग्यं, धर्मस्यैतत्फलं विदुः ॥ २ ॥ धनदो धनमिच्छूनां, कामदः काममिच्छताम् । धर्म एवापवर्गस्य, पारम्पर्येण साधकः ॥ ३ ॥ आरोग्यं सौभाग्यं धनाढ्यता नायकत्वमानन्दः । कृतपुण्यस्य स्यादिह सदा जयो वाञ्छितावाप्तिः ॥ ४ ॥ पुंसां शिरोमणीयन्ते, धर्मार्जनपरा नराः । आश्रीयन्ते च संपद्भिर्लताभिरिव पादपाः ॥ ५ ॥ धर्मो महामङ्गलमङ्गभाजां, धर्मो जनन्युद्दलिताखिलार्त्तिः । धर्मः पिता चिन्तितपूरितार्थो, धर्मः सुहृद्वर्द्धितनित्यहर्षः ॥ ६ ॥ धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं, धर्मेणैव भवन्ति निर्मलयशोविद्यार्थसंपत्तयः । कान्ताराच्च महाभयाच्च सततं धर्मः परित्रायते, धर्मः सम्यगुपासितो भवति हि स्वर्गापवर्गप्रदः ॥ ७ ॥ धर्मोऽयं धनवल्लभेषु धनदः कामार्थिषु कामदः, सौभाग्यार्थिषु तत्प्रदः किमपरं पुत्रार्थिनां पुत्रदः । राज्यार्थिष्वपि राज्यदः किमथवा नानाविकल्पैर्नृणां, तत्किं ? यन्न करोति किं च कुरुते स्वर्गापवर्गावपि ॥ ८ ॥ पत्नी प्रेमवती सुतः सविनयो भ्राता गुणालंकृतः, स्निग्धो बन्धुजनः सखाऽतिचतुरो नित्यं प्रसन्नः प्रभुः । निर्लोभोऽनुचरः स्वबन्धुसुमुनिप्रायोपयोग्यं धनं, पुण्यानामुदयेन संततमिदं कस्यापि संपद्यते ॥ ९ ॥ रम्यं रूपं करणपटुताऽऽरोग्यमायुर्विशालं, कान्ता रूपा विजितरतयः सूनवो भक्तिमन्तः । षट्खण्डोर्वीतलपरिवृढत्वं यशः क्षीरशुभ्रं, सौभाग्यश्रीरिति फलमहो धर्मवृक्षस्य सर्वम् ॥१०॥ कुलं विश्वश्लाघ्यं वपुरपगदं जातिरमला, सुरूपं सौभाग्यं ललितललना भोग्यकमला । चिरायुस्तारुण्यं बलमविकलं स्थानमतुलं, यदन्यच्च श्रेयो भवति भविनां धर्मत इदम् ॥ ११ ॥ आरोग्यभाग्याभ्युदयप्रभुत्वं, सत्त्वं शरीरे च जने महत्त्वम् । तत्त्वं च चित्ते सदने च संपत्, संपद्यते पुण्यवशेन पुंसाम् ॥ १२ ॥ सौभाग्यं विरलस्य स्यात्, समं

कर्मगुणेष्वपि । खड्गस्यैवोच्यते पृथ्वी, सर्वदण्डायुधेष्वपि ॥ १३ ॥ सुवृत्तोऽप्येक एवाच्यौं, लघुताऽपि तयोर्द्वयोः । वर्णे-
ष्वेकः शिरसोऽभूत्, बिन्दुस्तद्युगमग्रगम् ॥ १४ ॥

## धर्मप्रभावसूक्तानि ५

वने रणे शत्रुजलाग्निमध्ये, महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमस्थितं वा, रक्षन्ति पुण्यानि पुराकृ-
तानि ॥ १ ॥ सुचिरमपि उषित्वा स्यात्प्रियैर्विप्रयोगः, सुचिरमपि चरित्वा नास्ति भोगेषु तृप्तिः । सुचिरमपि हि
पुष्टं याति नाशं शरीरं, सुचिरमपि विचिन्त्यं त्राणमेको हि धर्मः ॥ २ ॥ निपानमिव मण्डूकाः, सरः पूर्णमिवाण्डजाः ।
शुभकर्माणमायान्ति, विवशाः सर्वसंपदः ॥ ३ ॥ धम्मेण कुलप्पसूई धम्मेण य दिव्वरूवसंपत्ती । धम्मेण धणस-
मिद्धी धम्मेण सवित्थरा कित्ती ॥ ४ ॥ न देवतीर्थैर्न पराक्रमेण, न मन्त्रतन्त्रैर्न सुवर्णदानैः । न धेनुचिन्तामणि-
कल्पवृक्षैर्विना स्वपुण्यैरिह वाञ्छितार्थाः ॥ ५ ॥ व्यसनशतगतानां क्लेशरोगातुराणां, मरणभयहतानां दुःखशोकार्दिता-
नाम् । जगति बहुविधानां व्याकुलानां जनानां, शरणमशरणानां नित्यमेको हि धर्मः ॥ ६ ॥ तावच्चन्द्रबलं ततो ग्रहबलं
ताराबलं भूबलं, तावत्सिद्ध्यति वाञ्छितार्थमखिलं तावज्जनः सज्जनः । मुद्रामण्डलतन्त्रमन्त्रमहिमा तावत्कृतं पौरुषं,
यावत्पुण्यमिदं सदा विजयते पुण्यक्षये क्षीयते ॥ ७ ॥ दीपो हन्ति तमःस्तोमं, रसो रोगमहाभरम् । सुधाबिन्दुर्विषावेगं,

१ धर्मेण कुलप्रसूतिः धर्मेण च दिव्यरूपसंपत्ति । धर्मेण धनसमृद्धिः धर्मेण सविस्तरा कीर्त्तिः ॥ ४ ॥

धर्मः पापभरं तथा ॥ ८ ॥ पञ्चभिः काम्यते कुन्ती, तद्वधूः पञ्च काम्यति । सतीनामग्रणी ख्याता, यशः पुण्यैरवाप्यते ॥ ९ ॥ पश्चिमाभिमुखं याति, त्यक्त्वा विपुलमम्बरम् । रविः शूर इति ख्यातो, यशः पुण्यैरवाप्यते ॥ १० ॥ मासि मासि समा ज्योत्स्ना, पक्षयोरुभयोरपि । तत्रैकः शुक्लपक्षोऽभूद्यशः पुण्यैरवाप्यते ॥ ११ ॥ केऽपि सहस्रंभरयः कुक्षिंभरयश्च केऽपि केऽपि नराः । नात्मंभरयस्तदिदं फलमखिलं सुकृतदुष्कृतयोः ॥ १२ ॥ निजदिवसानतिगमयति सुखमेवाखण्डमण्डलो भानुः । शशभृत्कष्टमनेकाः क्षयवृद्धिविडम्बनाः सहते ॥ १३ ॥ [1]तं पुण्णह अहिनाणु, जं गहिलाणवि रद्धडी । तं पावह परिमाणु, जं गुणवंतह भिक्खलडी ॥ १४ ॥ जइविहु विसमो कालो विसमा देसा निवाइआ विसमा । तहवि हु धम्मपराणं सिज्झइ कज्जं न संदेहो ॥ १५ ॥

## धर्मोद्यमसूक्तानि ६

[2]आसन्ने परमपए पावेअव्वंमि सयलकल्लाणे । जीवो जिणिंदभणिअं पडिवज्जइ भावओ धम्मं ॥ १ ॥ सुलहो विमाणवासो एगच्छत्ता य मेइणी सुलहा । दुलहा पुण जीवाणं जिणिंदवरसासणे बोही ॥ २ ॥ अपि लभ्यते

---

१ तत् पुण्यस्य अभिज्ञानं यत् ग्रथिलानामपि रथारोहः । तत् पापस्य परिमाणं यत् गुणवतः भिक्षा ॥ १४ ॥ यद्यपि तु विषमः कालः विषमाः देशाः नृपादिकाः विषमाः । तथापि तु धर्मपराणां सिद्ध्यति कार्यं न संदेहः ॥ १५ ॥ २ आसन्ने परमपदे प्राप्तव्ये सकलकल्याणे । जीवः जिनेन्द्रभणितं प्रतिपद्यते भावतः धर्मम् ॥ १ ॥ सुलभः विमानवासः एकच्छत्रा च मेदिनी सुलभा । दुर्लभः पुनर्जीवानां जिनेन्द्रवरशासने बोधिः ॥ २ ॥

गुराग्रं लभ्यन्ते पुरवराणि रम्याणि । न हि लभ्यते विशुद्धः सर्वज्ञोक्तो महाधर्मः ॥ ३ ॥ कृत्याकृत्यविभागस्य, ज्ञातारः स्वयमुत्तमाः । उपदेशे पुनर्मध्या, नोपदेशे नराधमाः ॥ ४ ॥ उत्तमाः सुखिनो बोध्या, दुःखिनो मध्यमाः पुनः । सुखिनो दुःखिनो वापि, बोधमर्हन्ति नाधमाः ॥ ५ ॥ भवकोटीदुष्प्रापामवाप्य नृभवादिसकलसामग्रीम् । भवजलधियानपात्रे धर्मे यत्नः सदा कार्यः ॥ ६ ॥ व्याकुलेनापि मनसा, धर्मः कार्यो निरन्तरम् । मेढीबद्धोऽपि हि भ्राम्यन्, घासग्रासं करोति गौः ॥ ७ ॥ भवन्ति भूरिभिर्भाग्यैर्धर्मकर्ममनोरथाः । फलन्ति यत्पुनस्ते तु, तत्सुवर्णस्य सौरभम् ॥ ८॥ प्रतिजन्म यदभ्यस्तं, जीवैः कर्म शुभाशुभम् । तेनैवाभ्यासयोगेन, तदेवाभ्यस्यते पुनः ॥ ९ ॥ चत्वारः प्रहरा यान्ति, देहिनां गृहचेष्टितैः । तेषां पादे तदर्धे वा, कर्तव्यो धर्मसंग्रहः ॥ १० ॥ [1]अंब्रासत्ते पिम्मं पावंमि मई अणुज्जमो धम्मे । मा दिज्ज दिव्व ! कइमवि जइ रुट्ठो होसि सयवारं ॥ ११ ॥ अनित्यानि शरीराणि, विभवो नैव शाश्वतः । नित्यं संनिहितो मृत्युः, कर्त्तव्यो धर्मसंग्रहः ॥ १२ ॥ उत्थायोत्थाय बोद्धव्यं, किमद्य सुकृतं कृतम् ? । आयुषः खण्डमादाय, रविरस्तमयं गतः ॥ १३ ॥ जानाति यज्जीवति नैव देही, सम्बन्धिनो वेत्ति च मृत्युमासान् । स्वं ग्रस्यमानं जरसाऽवगच्छन् दुर्मतिर्धर्ममतिस्तथाऽपि ॥ १४ ॥ धर्मार्थकाममोक्षाणां, यस्यैकोऽपि न विद्यते । अजागलस्तनस्येव, तस्य जन्म निरर्थकम् ॥ १५ ॥ [2]मा सुअह जग्गिअव्वे, पलाइअव्वंमि कीस वीसमह ? । तिन्नि जणा अणुलग्गा रोगो अ जरा य

---

१ धन्यागरके प्रेम पापे मतिरनुद्यमो धर्मे । मा दा देव! कथमपि यदि रुष्टो भवसि शतवारान् ॥ ११ ॥ २ मा स्वपिहि जागरितव्ये पलायितव्ये किं विश्राम्यत । त्रयो जनाः अनुलग्नाः, रोगश्च जरा च मृत्युश्च ॥ १६ ॥

मच्चू अ ॥१६॥ भव सघलुं कमाइउं, केसउ आविउं भागि ?। गाडुं भरिउं लक्कुडां, खोखरि हंडी आगिं॥ १७॥ याति कालो गलत्यायुः, क्षीयन्ते च मनोरथाः। सुकृतं न कृतं किञ्चित्, सतां संस्मरणोचितम् ॥ १८ ॥ धर्मादधिगतैश्वर्यो, धर्ममेव निहन्ति यः। कथं शुभगतिर्भावी? स स्वामिद्रोहपातकी ॥ १९ ॥ यस्य त्रिवर्गशून्यानि, दिनान्यायान्ति यान्ति च। स लोहकारभस्त्रेव, श्वसन्नपि न जीवति ॥ २० ॥ नान्तकस्य प्रियः कश्चिन्न लक्ष्म्याः कोऽपि वल्लभः। नाशो जरायाः कोऽप्यस्ति, यूयं तदपि सुस्थिताः ॥२१॥ अङ्कस्थाने भवेद्धर्मः, शून्यस्थानं ततः परम्। अङ्कस्थाने पुनर्भ्रष्टे, सर्वं शून्यमिदं भवेत् ॥२२॥ यथा विन्दुनिपातेन, क्रमशः पूर्यते सरः। स हेतुः सर्वविद्यानां, धर्मस्य च धनस्य च ॥ २३ ॥ न निमित्तद्विषां क्षेमो, नायुर्वैद्यकविद्विषाम्। न श्रीर्नीतिद्विषामेकमपि धर्मद्विषां न तु ॥ २४ ॥ धर्मशोकभयाहारनिद्राकामकलिक्रुधः। यावन्मात्रा विधीयन्ते, तावन्मात्रा भवन्त्यमी ॥ २५ ॥ यत्नः कामार्थयशसां, कृतोऽपि विफलो भवेत्। धर्मकर्मसारमम्भसंकल्पोऽपि न निष्फलः॥ २६ ॥ धर्मो जगतः सारः सर्वसुखानां प्रधानहेतुत्वात्। तस्योत्पत्तिर्मनुजात्सारं तेनैव मानुष्यम् ॥ २७ ॥ स्फुरत्कोटिगुणं धर्मं, प्राप्य मुञ्चन्ति योऽल्पधीः। तस्याधो धरणौ पातः, शरस्येव शरीरिणः ॥ २८ ॥ त्यज दुर्जनसंसर्गं, भज साधुसमागमम्। कुरु पुण्यमहोरात्रं, स्मर नित्यमनित्यताम् ॥ २९ ॥ विलम्बो नैव कर्त्तव्य, आयुर्याति दिने दिने। न करोति यमः क्षान्तिं, धर्मस्य त्वरिता गतिः ॥ ३० ॥ यावच्चित्तं च वित्तं च, यावदुत्सहते मनः। तावदात्महितं कुर्याद्धर्मस्य त्वरिता गतिः ॥ ३१ ॥ स्थैर्यं सर्वेषु कार्येषु, शंसन्ति नयपण्डिताः। वह्वन्तरायविघ्नस्य, धर्मस्य त्वरिता गतिः ॥ ३२ ॥ प्रथमे नार्जिता विद्या, द्वितीये नार्जितं धनम्। तृतीये नार्जितो धर्मश्चतुर्थे किं

करिष्यति ? ॥ ३३ ॥ छिन्नमूलो यथा वृक्षो, गतशीर्षो यथा भटः । धर्महीनो धनी तद्वत्कियत्कालं ललिष्यति ? ॥ ३४ ॥
मूलभूतं ततो धर्मं, सिक्त्वा भोगफलं बुधाः । गृह्णन्ति बहुशो मूढाः, समुच्छिद्यैकदा पुनः ॥ ३५ ॥ यदि मोक्षफलं
काले, भविता धर्मशासिनः । सिक्तस्तथापि संसारसौख्यच्छायां करोत्यसौ ॥ ३६ ॥ अतः सिञ्चन्ति तं पुण्यक्रियानीरेण
पण्डिताः । अनाचारकुठारेण, पुनश्छिन्दन्ति बालिशाः ॥ ३७ ॥ रम्येषु वस्तुषु मनोहरतां गतेषु, रे चित्त ! खेदमुपयासि
किमत्र चित्रम् ? । पुण्यं कुरुष्व यदि तेषु तवास्ति वाञ्छा, पुण्यं विना न हि भवन्ति समीहितार्थाः ॥ ३८ ॥ अवाप्य
धर्मावसरं विवेकी, कुर्याद्विलम्बं न हि विस्तराय । तातो जिनस्तक्षशिलाधिपेन, रात्रिं व्यतिक्रम्य पुनर्न नेमे ॥ ३९ ॥
पुनः प्रभातं पुनरेव शर्वरी, पुनः शशाङ्कः पुनरुत्थितो रविः । कालस्य किं गच्छति ? याति जीवितं, तथापि मूढः
स्वहितं न बुध्यते ॥ ४० ॥ ताराभ्रतारातटिनीभुजङ्गतरङ्गगङ्गासिकताकणानाम् । संख्यां स कृत्वा कुरुतां हि धर्मं, यो
धर्ममीप्सुः कृतगेहकृत्यः ॥ ४१ ॥ येन प्रभुस्वजनवैभवदेहगेहचिन्तातुरेण सुकृतं न कृतं कदाचित् । वैवाहिकैराकुलितस्य
तस्य, नो पाणिपीडनविधिः स्मृतिमाजगाम ॥ ४२ ॥ जानासि शम्बलबलं बलमध्वगानां, नो शम्बलाय यतसे परलोकपा-
न्थः । गन्तव्यमस्ति तव निश्चितमेव तेन, मार्गेण येन न भवेत्क्रयविक्रयोऽपि ॥ ४३ ॥ प्रहरद्वयमार्गेऽपि, नराः कुर्वन्ति
शम्बलम् । न कुर्वन्ति परत्रार्थे, वर्षकोटिप्रयाणके ॥ ४४ ॥ अबद्धमपि ह्यात्मानं सुबद्धमिव मन्यते । नलिकाभ्रमणभ्रान्तपक्षीव
विकलो जनः ॥ ४५ ॥ ग्रामान्तरे विहितशम्बलकः प्रयाति, सर्वोऽपि लोक इह रूढिरिति प्रसिद्धा । मूढस्तु दीर्घपरलो-
कपथप्रयाणे, पाथेयमात्रमपि नो विदधात्यधन्यः ॥ ४६ ॥ जागर्ति यावदिह कालभुजङ्गमो न, पञ्चाननः स्वपिति याव-

दयं च कामः । यावद्विवेकनिहताऽस्ति च मोहरात्रिर्निर्गच्छ संसृतिवनान्निभृतोऽङ्ग ! तावत् ॥४७॥ यावत्स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा, यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः । आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्, आदीप्ते भवने च कूपखननं प्रत्युद्यमः कीदृशः ? ॥४८॥ आयुर्वर्षशतं नृणां परिमितं रात्र्या तदर्धीकृतं, तस्यार्द्धस्य कदाचिदर्द्धमधिकं वार्द्धक्यबाल्ये गतम् । शेषं रोगवियोगशोकमदनक्रोधादिभिर्व्याकुलस्यायुर्याति नरस्य तत्र कतमो यो धर्मकर्मक्षणः ? ॥४९॥ बालः प्रायो रमणाऽऽसक्तस्तरुणः प्रायो रमणीरक्तः । वृद्धः प्रायश्चिन्तामग्नस्तदहो धर्मे कोऽपि न लग्नः ॥ ५० ॥ निर्दन्तः करटी हयो गतजवश्चन्द्रं विना शर्वरी, निर्गन्धं कुसुमं सरो गतजलं छायाविहीनस्तरुः । रूपं निर्लवणं सुतो गतगुणश्चारित्रहीनो यतिर्निर्देवं भवनं न राजति तथा धर्मं विना मानवः ॥ ५१ ॥ राज्यं निःसचिवं गतप्रहरणं सैन्यं विनेत्रं मुखं, वर्षा निर्जलदा धनी च कृपणो भोज्यं तथाऽऽज्यं विना । दुःशीला दयिता सुहृन्निकृतिमान् राजा प्रतापोज्झितः, शिष्यो भक्तिविवर्जितो न हि विना धर्मं नरः शस्यते ॥ ५२ ॥ तोयेनेव सरः श्रियेव विभुता सेनेव सुस्वामिना, जीवेनेव कलेवरं जलधरश्रेणीव वृष्टिश्रिया । प्रासादस्त्रिदशार्चयेव सरसत्वेनेव काव्यं प्रिया, प्रेम्णेव प्रतिभासते न रहितो धर्मेण जन्तुः क्वचित् ॥ ५३ ॥

---

१ जह निहिसंठिय पवहण इक्कावनभागसरिस गिहकज्ज । बावन्नभागसरिसो जिणधम्मो होइ कायव्वो ॥ १ ॥ दिवसनिसाघडिमालं आउसलिलं जिआण धित्तुणं । चंदाइचबइल्ला कालऽरहट्टं भमाडंति ॥ २ ॥ छायामिसेण कालो सयलजिआणं छलं गवेसंतो । पासं कहवि न मुंचइ ता धम्मे उज्जमं कुणह ॥ ३ ॥ कंमइ वारं उड पडओ धम्मइ मंडिअ देह । आपणसरिसी चोरडी तइं किम सीली एह ॥ ४ ॥ जे जिणधम्मह बाहिरा ते जाणेवा चारि ।

## मानुष्यभवसूक्तानि ७

न्यग्रोधे दुर्लभं पुष्पं, दुर्लभं स्वातिजं पयः । दुर्लभं मानुषं जन्म, दुर्लभं देवदर्शनम् ॥ १ ॥ अनर्घ्याण्यपि रत्नानि, लभ्यन्ते विभवैः सुखम् । दुर्लभो रत्नकोट्याऽपि, क्षणोऽपि मनुजायुषः ॥ २ ॥ हतं मुष्टिभिराकाशं, तुषाणां खण्डनं कृतम् । यन्मया प्राप्य मानुष्यं, सदर्थे नादरः कृतः ॥ ३ ॥ एगदिणे जे देवा चयंति तेसिंपि माणुसा थोवा । कत्तो मे मणुयभवो इय चिंतइ सुरवरो दुहिओ ॥ ४ ॥ केऽप्याप्तमपि पुण्येन, तत्प्रमादपरायणाः । हारयन्ति नराः सुप्ता, इव चिन्तामणिं करात् ॥ ५ ॥ मानुष्यमार्यविषयः सुकुलप्रसूतिः, श्रद्धालुता गुरुवचःश्रवणं

---

ऊगी ऊगी रय गया संसारि संसारि ॥ ५ ॥ वरसह ते गणि दीहडा जे जिणधम्मिहिं सार । तिणि सया उण सठी ईम्हइ गणइ गमार ॥ ६ ॥ धणु चिंतंतओ धम्मु करि, धम्मेण य धणु होइ । धणु चिंतंतओ जइ मरइ, दुण्हवि इक्कु न होइ ॥ ७ ॥ आउ करे विणु ओअ करेसु, जन्न विढत्तं तं विढवेसु । अच्छइ हिअयं चिंतामरिअं, जं मरिअव्वं तं वीसरिअं ॥ ८ ॥ दीहा जंति वलंति नहि, जिम गिरीनिज्झरणाइं । लहु ओलगी जिअ ! धम्म करि, सुअइं निचिंतउ काइं ॥ ९ ॥ मोह न मिल्हइ घरतणओ, जइ सिरि पलिआ केस । वलि वलि जिणधम्मह तणा, को देसिइ उवएस? ॥ १० ॥ निज्जीवह उवएसडा, मुहिआ जंति न भंति । पाणी घणु विलोडिअइ, कर चोपडा न हुंति ॥ ११ ॥ अवसरू देपी धंमु करि, लीजइ जुव्वण लांपु । जइ जमु देसइ दीहडा, तओ जर देसि झांप ॥ १२ ॥ जइ पूरी पंचास पालि परत्तह बंधीइ । विभवह अनइ विलास, आस न कीजइ आसणी ॥ १३ ॥ पावहसरिसी मित्रडी, लोहहसरिसओ नेहु । धम्मह सरिसउं रसणउं, बूडत कुण संदेहु ॥ १४ ॥ पगलगपाखर जाइं, भाडी तणी अजाणि वा । गुरु उपदेसो ताइं, छांगी पूला गइ नहि ॥ १५ ॥ भारीकम्मा जीवडा, जइ बुज्झसि ता बुज्झ । सव्व कुडुंबउं खाइसिइ, माथइ पडिसिइ तुज्झ ॥ १६ ॥ हाथ घसइ भुइंआ हणइ, जीभं तालुं दिइ । मरणवेलां संभरइ, मइं नहु कीधउ धम्मु ॥ १७ ॥

विवेकः। मोहान्धिते जगति संप्रति सिद्धिसौधसोपानपद्धतिरियं सुकृतोपलभ्या ॥ ६ ॥ मानुषं भवमवाप्य दक्षिणावर्त्त-शङ्खवदमुं भवाम्बुधौ। पूरयेत्सुकृतगाङ्गवारिणा, पापवृत्तिसुरया न चोत्तमः ॥ ७ ॥ देवा[१] विसयपसत्ता नेरइआ विविह-दुक्खसंतत्ता। तिरिआ विवेगविगला मणुआणं धम्मसामग्गी ॥ ८ ॥ चुल्लगपासगधन्ने जूएँ रयणे अ सुविणँ चक्के अ। चम्मजुगे परमाणूं दस दिट्ठंता मणुअलंभे ॥ ९ ॥ विप्रः प्रार्थितवान् प्रसन्नमनसः श्रीब्रह्मदत्तात्पुरा, क्षेत्रेऽस्मिन् भरते-ऽखिले प्रतिगृहं मे भोजनं दापय। इत्थं लब्धवरोऽथ तेष्वपि कदाऽप्यश्नात्यहो द्विः स चेत्, भ्रष्टो मर्त्त्यभवात्तथाऽ-प्यसुकृती भूयस्तमाप्नोति नो ॥ १० ॥ स्तम्भानां हि सहस्रमष्टसहितं प्रत्येकमष्टोत्तरं, कोणानां शतमेषु तानपि जयन् द्यूतेऽथ तत्संख्यया। साम्राज्यं जनकात्सुतः स लभते स्याचेदिदं दुर्घटं, भ्रष्टो मर्त्त्यभवात्तथाऽप्यसुकृती भूयस्तमाप्नोति नो ॥ ११ ॥ वृद्धा काऽपि पुरा समस्तभरतक्षेत्रस्य धान्यावलिं, पिण्डीकृत्य च तत्र सर्षपकणान् क्षिप्त्वाऽऽढकेनोन्मि-तान्। प्रत्येकं हि पृथक्करोति किल सा सर्वाणि चान्नानि चेत्, भ्रष्टो मर्त्त्यभवात्तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ १२ ॥ सिद्धद्यूतकलाबलाद् धनिजनं जित्वाऽथ हेम्नां भरैश्चाणाक्येन नृपस्य कोशनिवहः पूर्णीकृतो हेलया। दैवादाढ्यजनेन तेन स पुनर्जीयेत मन्त्री क्वचित्, भ्रष्टो मर्त्त्यभवात्तथाप्यसुकृती भूयस्तमाप्नोति न ॥ १३ ॥ रत्नान्याढ्यसुतैर्वितीर्य वणिजां देशान्तरादीयुषां, पश्चात्तापवशेन तानि पुनरादातुं कृतोपक्रमैः। लभ्यन्ते निखिलानि दुर्घटमिदं दैवाद् घटेत क्वचित्, भ्रष्टो

१ देवा विषयप्रसक्ता नैरयिका विविधदुःखसंतप्ताः। तिर्यञ्चो विवेकविकला मनुष्याणां धर्मसामग्री ॥ ८ ॥ भोजनं पाशा धान्यानि द्यूतं रत्नानि स्वप्नः चक्रं च। कच्छपो युगं परमाणवो दश दृष्टान्ता मनुष्यलाभे ॥ ९ ॥

मर्त्यभवात्तथाप्यसुकृती भूयस्तमाप्नोति न ॥ १४ ॥ स्वप्ने कार्पटिकेन रात्रिविगमे श्रीमूलदेवेन च, प्रेक्ष्येन्दुं सकलं कुनि-
र्णयवशादल्पं फलं प्राप्य तत्। स्वप्नस्तेन पुनः स तत्र शयितेनालोक्यते कुत्रचिद्, भ्रष्टो मर्त्यभवात्तथाप्यसुकृती भूय-
स्तमाप्नोति न ॥ १५ ॥ राधाया वदनादधः क्रमवशाच्चक्राणि चत्वार्यथ, भ्राम्यन्तीह विपर्ययेण तदधो धन्वी स्थितोऽ-
वाङ्मुखः। तस्या वामकनीनिकामिषुमुखेनैवाशु विध्यत्यहो, भ्रष्टो मर्त्यभवात्तथाप्यसुकृती भूयस्तमाप्नोति न ॥ १६ ॥
दृष्ट्वा कोऽपि हि कच्छपो ह्रदमुखे सेवालबन्धे च्युते, पूर्णेन्दुं मुदितः कुटुम्बमिह तं द्रष्टुं समानीतवान्। सेवाले मिलि-
ते कदापि स पुनश्चन्द्रं किलाऽऽलोकते, भ्रष्टो मर्त्यभवात्तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ १७ ॥ शम्या पूर्वपयोनिधौ
निपतिता भ्रष्टं युगं पश्चिमाम्भोधौ दुर्धरवीचिभिश्च सुचिरात्संयोजितं तद्द्वयम्। शम्या सा प्रविशेद्युगस्य विवरे तस्य
स्वयं क्वापि चेद्, भ्रष्टो मर्त्यभवात्तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ १८ ॥ चूर्णीकृत्य पराक्रमान्मणिमयं स्तम्भं सुरः
क्रीडया, मेरौ सन्नलिकासमीरवशतः क्षिप्त्वा रजो दिक्षु चेत्। स्तम्भं तैः परमाणुभिः सुमिलितैः कुर्यात्स चेत्पूर्ववत्,
भ्रष्टो मर्त्यभवात्तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ १९ ॥

## प्रमादत्यागसूक्तानि ८

चर्मवर्म किल यस्य न भेद्यं, यस्य वज्रमयमस्थि च तौ चेत्। स्वामिनाविह न कर्णदधीची, तन्न धर्ममव-
धीरय धीर ! ॥ १ ॥ आर्यदेशकुलरूपबलायुर्बुद्धिबन्धुरमवाप्य नरत्वम्। धर्मकर्म न करोति जडो यः, पोतमुज्झति

पयोधिगतः सः ॥ २ ॥ यः प्राप्य दुष्प्रापमिदं नरत्वं, धर्मं न यत्नेन करोति मूढः। क्लेशप्रबन्धेन स लब्धमब्धौ, चिन्तामणिं पातयति प्रमादात् ॥ ३ ॥ स्वर्णस्थाले क्षिपति स रजः पादशौचं विधत्ते, पीयूषेण प्रवरकरिणं वाहयत्येन्धभारम्। चिन्तारत्नं विकिरति कराद्वायसोड्डायनार्थं, यो दुष्प्रापं गमयति मुधा मर्त्यजन्म प्रमत्तः ॥ ४ ॥ आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं, व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते। दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते, पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ५ ॥ ते धत्तूरतरुं वपन्ति भुवने प्रोन्मूल्य कल्पद्रुमं, चिन्तारत्नमपास्य काचशकलं स्वीकुर्वते ते जडाः। विक्रीय द्विरदं गिरीन्द्रसदृशं क्रीणन्ति ते रासभं, ये प्राप्तं परिहृत्य धर्ममधमा धावन्ति भोगाशयाः ॥ ६ ॥ यत्संपत्त्या न युक्ता जगति तनुभृतो यच्च नापद्विमुक्ता, यन्नाधिव्याधिहीनाः सकलगुणगणालङ्कृताङ्गाश्च यन्नो। यन्न स्वर्गं लभन्ते निखिलसुखखनिं मोक्षसौख्यं च यन्नो, दुष्टः कल्याणमालादलनपटुरयं तत्र हेतुः प्रमादः ॥ ७ ॥ विना दिनानि सत्कर्म, हृदयङ्गमसङ्गमैः। धातः! सरस्वतीतात, लिखन् मूर्ख! न लज्जसे? ॥ ८ ॥ प्रमादः परमद्वेषी, प्रमादः परमं विषम्। प्रमादो मुक्तिपूर्दस्युः, प्रमादो नरकालयः ॥ ९ ॥ प्रमादस्य महाहेश्च, दृश्यते महदन्तरम्। आद्याद्भवे भवे मृत्युः, परस्माज्जायते न वा ॥ १० ॥ अलसोऽनुपायवेदी भाग्यैरत्यन्तमुज्झितो यश्च। सीदति पुरुषत्रितयं केवलमिह जगति बहुरत्ने ॥ ११ ॥ निद्रा मूलमनर्थानां, निद्रा श्रियो विघातिनी। निद्रा प्रमादजननी, निद्रा संसारवर्द्धनी ॥ १२ ॥ अनिष्टे न मतिं दद्यात्तयाऽसौ नरकं व्रजेत्। तस्मात्सर्वप्रयत्नेन, इष्टे

धर्मे नियोजयेत् ॥ १३ ॥ मंज्जं विसय कसाया निद्दा विगहा य पंचमी भणिआ। एए पंच पमाया जीवं पाडन्ति संसारे ॥ १४ ॥

## पापत्यागसूक्तानि ९

अकर्त्तव्यं न कर्त्तव्यं, प्राणैः कण्ठगतैरपि । सुकर्त्तव्यं तु कर्त्तव्यं, प्राणैः कण्ठगतैरपि ॥ १ ॥ राजदण्डभयात्पापं, नाचरत्यधमो जनः। परलोकभयान्मध्यः, स्वभावादेव चोत्तमः ॥ २ ॥ पापासक्ते चेतसि धर्मकथाः स्थानमेव न लभन्ते। नीलीरक्ते वाससि कुङ्कुमरागो दुराधेयः ॥ ३ ॥ पुरुषः कुरुते पापं बन्धुनिमित्तं वपुर्निमित्तं वा । वेदयते तत्सर्वं नरकादौ पुनरसावेकः ॥ ४ ॥ यत्नेन पापानि समाचरन्ति, धर्मं प्रसङ्गादपि नाचरन्ति । आश्चर्यमेतद्धि मनुष्यलोके, क्षीरं परित्यज्य विषं पिबन्ति ॥ ५ ॥ धर्मस्य फलमिच्छन्ति, धर्मं नेच्छन्ति मानवाः । फलं पापस्य नेच्छन्ति, पापं कुर्वन्ति सादराः ॥ ६ ॥ पापं समाचरति वीतघृणो जघन्यः, प्राप्यापदं सघृण एव विमध्यबुद्धिः । प्राणा-

---

१ मद्यं विषयः कषायाः निद्रा विकथा च पञ्चमी भणिता। एते पञ्च प्रमादाः, जीवं पातयन्ति संसारे ॥ १४ ॥ २ वत्त करंता वरसहि, रयणि हवकि विहाइ। जइ धम्मक्खरु संभलइ, नयणे निद्द न माइ ॥ १ ॥ कम्मेण य घरु चिंतसि, धम्मेण य परलोउ। जहिं नर मुत्तां उग्गमइ, तहिं नर आउ न भोउ ॥ २ ॥ लाधालाहउ लजि भिय जइ किर दिहा च्यारि। किंकर किरतारह तणा घइसई लागजि बारि ॥ ३ ॥ जीव कडेवरु इम भणइ, मई हुं तई करि धम्मु। हुं माटी तुं रयणनिहि, हारि म माणुस जम्मु ॥ ४ ॥ चउदसपुव्वी आहारगा य मणनाणि वीयरागावि। हुंति पमायपरवसा तयणंतरमेव चउगइया ॥ ५ ॥ इति प्रत्यन्तरे

त्ययेऽपि न हि साधुजनः स्ववृत्तं, वेलां समुद्र इव लङ्घयितुं समर्थः ॥ ७ ॥ किं चित्रं ? यदि दण्डनीतिनिपुणो राजा भवेद्धार्मिकः, किं चित्रं ? यदि वेदशास्त्रनिपुणो विप्रो भवेत्पण्डितः । तच्चित्रं यदि रूपयौवनवती साध्वी भवेत्कामिनी, तच्चित्रं यदि निर्द्धनोऽपि पुरुषः पापं न कुर्यात्पुनः ॥ ८ ॥ पापी रूपविवर्जितः परुषवाग् यो नारकादागतस्तिर्यग्योनिसमागतश्च कपटी नित्यं बुभुक्षातुरः । मानी ज्ञानविवेकबुद्धिकलितो यो मर्त्यलोकागतो, यस्तु स्वर्गपरिच्युतः स सुभगः प्राज्ञः कविः श्रीयुतः ॥ ९ ॥ स्वर्गच्युतानामिह जीवलोके, चत्वारि नित्यं हृदये वसन्ति । दानप्रसङ्गो विमला च वाणी, देवार्चनं सद्गुरुसेवनं च ॥ १० ॥

## न्यायसूक्तानि १०

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु, लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् । अद्यैव वा मरणमस्तु युगान्तरे वा, न्यायात्पथः प्रविचलन्ति पदं न धीराः ॥ १ ॥ दुःखं वरं चैव वरं च भैक्ष्यं, वरं च मौर्ख्यं हि वरं रुजोऽपि । मृत्युः प्रवासोऽपि वरं नराणां, परं सदाचारविलङ्घनं नो ॥ २ ॥ सदाचारस्य धीरस्य, धीमतो दीर्घदर्शिनः । न्यायप्रवृत्तस्य सतः, सन्तु वा यान्तु वा श्रियः ॥ ३ ॥

## पापफलसूक्तानि ११

अनाज्यं भोज्यमप्राज्यं, विप्रयोगः प्रियैः सह । अप्रियैः संप्रयोगश्च, सर्वं पापविजृम्भितम् ॥ १ ॥ शिष्याणां हि गुरुः

शास्ता, शास्ता राजा दुरात्मनाम्। अथ प्रच्छन्नपापानां, शास्ता वैवस्वतो यमः ॥ २ ॥ जठराग्निः पचत्यन्नं, फलं
कालेन पच्यते। कुमन्त्रैः पच्यते राजा, पापी पापेन पच्यते ॥ ३ ॥ सर्वत्र शुचयो धीराः, सुकर्मबलगर्विताः। कुकर्म-
भयवित्रस्ताः, पापाः सर्वत्र शङ्किताः ॥ ४ ॥ अत्युग्रपुण्यपापानामिहैव फलमाप्यते। त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रि-
भिर्दिनैः ॥ ५ ॥ कुग्रामवासः कुनरेन्द्रसेवा, कुभोजनं क्रोधमुखी च भार्या। कन्याबहुत्वं च दरिद्रता च, षड् जीवलोके
नरका भवन्ति ॥ ६ ॥ ग्रामे वासो नायको निर्विवेकः, कौटिल्यानामेकपात्रं कलत्रम्। नित्यं रोगः पारवश्यं च पुंसामे-
तत्सर्वं जीवतामेव मृत्युः ॥ ७ ॥ मांचइ मांकुण घरु चुअइ चिलकडां वहु आइं। अकुवालणि जव तउणि, नर गह
एह फलाइ ॥ ८ ॥

## कलिसंबन्धिसूक्तानि १२

कृते वर्षसहस्रेण, त्रेतायां हायनेन च। द्वापरे यच्च मासेन, अहोरात्रेण तत्कलौ ॥ १ ॥ संकुचन्ति कलौ
तुच्छाः, प्रसरन्ति महाशयाः। ग्रीष्मे सरांसि शुष्यन्ति, कामं वार्द्धिश्च वर्द्धते ॥ २ ॥ धर्मः पर्वतगस्तपः
प्रचलितं सत्यं च दूरे गतं, पृथ्वी मन्दफला नृपाश्च कुटिलाः शस्त्रायुधा ब्राह्मणाः। लोकः स्त्रीषु रतः स्त्रियोऽतिचपला
लौल्ये स्थिता मानवाः, साधुः सीदति दुर्जनः प्रभवति प्रायः प्रविष्टः कलिः ॥ ३ ॥ कालः सम्प्रति वर्त्तते कलियुगः
सन्तो नरा दुर्लभा, देशाश्च प्रलयं गताः करभरैर्लोभं गताः पार्थिवाः। नानाचौरगणा मुषन्ति पृथिवीमार्यो जनः क्षीयते,

पुत्रस्यापि न विश्वसन्ति पितरः कष्टं युगं वर्त्तते ॥ ४ ॥ सर्वत्रोद्गतकन्दला वसुमती वृद्धिर्जडानां परा, जातं निष्कमलं जगत् गुणिभिः प्राप्ता घनैरुन्नतिः । सर्पन्ति प्रतिमन्दिरं द्विरसनाः संत्यक्तमार्गो जनो, धिकष्टं कुनराधिपस्य च कलेर्वर्षास्वरूपं तथा ॥ ५ ॥ तैस्तैर्घोरैर्व्याधिभिः पीड्यमानः, पापाचारैस्तस्करैर्मुष्यमाणः । दुर्भिक्षार्त्तो राजदण्डावसन्नश्चक्रारूढः साम्प्रतं जीवलोकः ॥ ६ ॥ राजा राक्षसरूपेण, शत्रुरूपेण मन्त्रिणः । संग्रहो व्याधिरूपेण, यः प्रयाति स जीवति ॥ ७ ॥ सीदन्ति सन्तो विलसन्त्यसन्तः, पुत्रा म्रियन्ते जनकश्चिरायुः । परेषु तोषः स्वजनेषु रोषः, पश्यन्तु लोकाः कलिकेलितानि ॥ ८ ॥ कलियुगमध्योत्पन्नाः कृतयुगमध्यानुसारिणः कस्मात् । इति कोपादिव कलिना पीड्यन्ते साधवः सततम् ॥ ९ ॥ उच्छिन्नविषयग्रामाः, स्थानादुच्चलितद्विजाः । सर्वत्र वलिभिः क्रान्ता, वृद्धनारीव भूरभूत् ॥ १० ॥ नष्टा श्रुतिः स्मृतिर्लुप्ता, प्रायेण पतिता द्विजाः । अवसादश्च सन्मार्गे, हा वृद्धो वर्त्तते कलिः ॥ ११ ॥

पापफल द्वारं ११ श्लो. ८

कलि द्वारं १२ श्लो. ११

## दुःखसंबन्धिसूक्तानि १३

दुःखसंवि-धिद्वा. १३ श्लो. १४

निर्विवेकतया वाल्यं, कामोन्मादेन यौवनम् । वृद्धत्वं विकलत्वेन, सदा सोपद्रवं नृणाम् ॥ १ ॥ प्रातर्मूत्रपुरीषाभ्यां, मध्याह्ने क्षुत्पिपासया । सदा कामेन वाध्यन्ते, प्राणिनो निशि निद्रया ॥ २ ॥ गतसारेऽत्र संसारे, सुखभ्रान्तिः शरीरिणाम् । लालापानमिवाङ्गुष्ठे, वालानां स्तन्यविभ्रमः ॥ ३ ॥ दिनमेकं शशी पूर्णः, क्षीणस्तु बहुवासरान् । सुखादुःखं सुराणामप्यधिकं का कथा नृणाम् ? ॥ ४ ॥ एकस्य दुःखस्य न यावदन्तं, गच्छाम्यहं पारमिवार्णवस्य । तावद् द्वितीयं समुपस्थितं मे, छिद्रेष्वनर्था बहुलीभवन्ति ॥ ५ ॥ दुःखं स्त्रीकुक्षिमध्ये प्रथममिह भवे

गर्भागे नराणां, बाल्ये चापि दुःखं मललुलितवपुः स्त्रीपयःपानमिश्रम् । तारुण्ये चापि दुःखं भवति विरहजं वृद्ध-
भावोऽप्यसारः, संसारे रे मनुष्या ! वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित् ॥ ६ ॥ कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः
स्थितं गर्भमध्ये, कान्ताविश्लेषरूपव्यतिकरविषमो यौवने विप्रयोगः । नारीणामप्यवज्ञा विलसति नियतं वृद्धभावोऽ-
प्यसाधुः, संसारे रे मनुष्या ! वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित् ॥ ७ ॥ दुष्टः कर्मविपाकभूपतिवशः कायाह्वयः
कर्मकृत्, पश्चात् कर्मगुणैर्हृषीकचपकैः पीतप्रमादासवम् । कृत्वा नारकचारकापदुचितं त्वां प्राप्य चाशु च्छलं, गन्तेति
स्वहिताय संयमभरं तं वाहयाल्पं ददत् ॥ ८ ॥ दारिद्र्याकुलचेतसां सुतसुताभार्यादिचिन्ताजुषां, नित्यं दुर्भरदेहपोषणकृते
रात्रिन्दिवा सिद्यताम् । राजाज्ञाप्रतिपालनोद्यतधियां विश्राममुक्तात्मनां, सर्वोपद्रवशङ्किनामघभृतां धिग्देहिनां जीवितम्
॥ ९ ॥ निर्द्रव्यो धनचिन्तया धनपतिस्तद्रक्षणे चाकुलो, निःस्त्रीकस्तदुपायसंगतमतिः स्त्रीमानपत्येच्छया । प्राप्तापत्यपरि-
ग्रहोऽपि सततं रोगैरभिद्रूयते, जीवः कोऽपि कथञ्चनापि नियतं प्रायः सदा दुःखितः ॥ १० ॥ आः किं सुन्दरि ! सुन्दरं
न कुरुषे ? किं नो करोषि स्वयं ?, धिक् त्वां क्रोधमुखीमलीकमुखरस्त्वत्तोऽपि कः कोपनः ? । आः पापे ! प्रतिजल्पसि
प्रतिपदं ? पापस्त्वदीयः पिता, दम्पत्योरिति नित्यदन्तकलहक्लेशार्त्तयोः किं सुखम् ? ॥ ११ ॥ नानाकोलबिलाकुलं बहुरजः-
संकीर्णमूर्णाभृतं, तार्णं जीर्णकुटीरकं कटु रटन् द्वारे च खञ्जः खरः । भार्याऽकार्यरता सुता बहुविधव्याधिव्यथाविह्वला,
दण्डीखण्डमचण्डशीतहरणं वासस्तृणैः स्रस्तरः ॥ १२ ॥ गेहं जर्जरमाखुभिः कृतविलं चेलं च यूकालयः, शय्या मत्कुण-
संकुला वपुषि रुग् रूक्षाशनं भोजनम् । वृत्तिर्भारवहादिका परुषवागज्ञा कुरूपा वधूर्यस्येत्थं ननु सोऽपि नोज्झति गृहा-

मग्नं हहा मूढधीः ॥ १३ ॥ तार्णं जीर्णं कुटीरं वृषनकुलकुलैः संकुलं धान्यशून्यं, काणा काली कुरूपा कटुरटनपरा गेहिनी स्नेहहीना। दण्डी हण्डी च खण्डी श्रुतिविकलखरी द्वारि कोकूयमाना, जीवानां संपदेषा रमयति हृदयं ही महामोहचेष्टा ॥ १४ ॥



## अनुशास्तिसूक्तानि १४

चिंतय रे जीव! तए अन्नाणवसेण विवेगरहिएण। विअणाउ अमाणाउ नरएसु अणंतसो पत्ता ॥ १ ॥ बालस्स माइमरणं भज्जामरणं च जुव्वणत्थस्स। थेरस्स पुत्तमरणं तिन्निवि दुक्खाइं गुरुआइं ॥ २ ॥ अच्छिनिमीलणमित्तं नत्थि सुहं दुक्खमेव पडिबद्धं। नरए नेरइआणं अहोनिसं पच्चमाणाणं ॥ ३ ॥ जं नरए नेरइआ दुक्खं पावंति गोअमा! तिक्खं। तं पुण निगोअमज्झे अणंतगुणिअं मुणेयव्वं ॥ ४ ॥ सूइहिं अग्गिवण्णाहिं, संभिन्नस्स निरंतरं। जावइअं गोअमा! दुक्खं, गब्भे अट्ठगुणं तओ ॥ ५ ॥ गर्भस्थधोमुखो दुःखी, जननीपृष्ठिसंमुखः। वद्धाञ्जलिर्ललाटे च, पच्यते जठराग्निना ॥ ६ ॥ असौ जागर्ति जाग्रत्यां, स्वपत्यां स्वपिति स्फुटम्। सुखिन्यां सुखवान्

---

१ चिन्तय रे जीव! त्वया अज्ञानवशेन विवेकरहितेन। वेदनाः अमानाः नरकेषु अनन्तशः प्राप्ताः ॥ १ ॥ बालस्य मातृमरणं भार्यामरणं च यौवनस्थस्य। स्थविरस्य पुत्रमरणं त्रीण्यपि दुःखानि गुरुकाणि ॥ २ ॥ अक्षिनिमीलनमात्रं नास्ति सुखं दुःखमेव प्रतिबद्धम्। नरके नारकाणामहोनिशं पच्यमानानाम् ॥ ३ ॥ यत् नरके नैरयिकाः दुःखं प्राप्नुवन्ति गौतम! तीक्ष्णम्। तत् पुनर्निगोदमध्ये अनन्तगुणं ज्ञातव्यम् ॥ ४ ॥ सूचीभिः अग्निवर्णाभिः, संभिन्नस्य निरन्तरम्। यावत् गौतम! दुःखं, गर्भे अष्टगुणं ततः ॥ ५ ॥

दुःखसंबन्धिद्वारं १३ श्लोकाः १४

अनुशास्तिसंबंधिद्वारं १४ श्लो. २३

दुःखी, दुःखवत्यां च मातरि ॥ ७ ॥ गर्भे जीवो वसत्येवं, वासराणां शतद्वयम् । अधिकं सप्तसप्तत्या, दिवसार्द्धेन च
ध्रुवम् ॥ ८ ॥ पुरुषो दक्षिणे कुक्षौ, वामे स्त्री यमलौ द्वयोः । ज्ञेयं तूदरमध्यस्थं, नपुंसकमसंशयम् ॥ ९ ॥ जायमाणस्स जं
दुक्खं, मरमाणस्स जंतुणो । तेण दुक्खेण संतत्तो, न सरई पुव्वजाइयं ॥ १० ॥ ता धीर मा विसीअसु इमासु
अइ अप्पवेअणासु तुमं । को उत्तरिउं जलहिं निबुड्डुए गुप्पई तीरी ? ॥ ११ ॥ न परो करेइ दुक्खं नेव सुहं कोइ
कस्सई देई । जं पुण सुचरिअ दुचरिअ परिणमइ पुराणयं कम्मं ॥ १२ ॥ तावच्चिअ होइ सुहं जाव न कीरइ पिओ
जणो कोवि । पिअसंगो जेण कओ दुक्खाण समप्पिओ अप्पा ॥ १३ ॥ अपकारिषु मा पापं, चिन्तयस्व कदाचन ।
स्वयमेव पतिष्यन्ति, कूलजाता इव द्रुमाः ॥ १४ ॥ मृत्योर्बिभेषि किं ? बाल !, स च जातं न मुञ्चन्ति । अजातं नैव
गृह्णाति, कुरु यत्नमजन्मनि ॥ १५ ॥ चिरपरिचितेष्ववज्ञा न भवेत्प्रीतिरिति हि जनवादः । चिरतनशरीरनाशे नवतर-
लाभेऽपि किं भीतः ? ॥ १६ ॥ सत्यं मनोरमाः कामाः, सत्यं रम्या विभूतयः । किंतु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवि-
तम् ॥ १७ ॥ महता पुण्यपण्येन, क्रीतेयं कायनौस्त्वया । पारं भवोदधेर्गन्तुं, त्वर यावन्न भिद्यते ॥ १८ ॥ लोकः
पृच्छति मे वार्त्तां, शरीरे कुशलं तव । कुतः कुशलमस्माकमायुर्याति दिने दिने ॥ १९ ॥ संसारे संवसतां कुशलं किं

---

१ जायमानस्य यद् दुःखं, म्रियमाणस्य जन्तोः । तेन दुःखेन संतप्तः न स्मरति पूर्वजातिम् ॥ १० ॥ धीर! मा विषीद इमास्वत्यल्पवेदनासु त्वम् । क उत्तीर्य जलधिं निमज्जति गोष्पदतीरे ॥ ११ ॥ न परः करोति दुःखं नैव सुखं कोऽपि कस्यापि ददाति । यत्पुनः सुचरितं दुश्चरितं परिणमति पुरातन कर्म ॥ १२ ॥ २ तावदेव भवति सुखं यावत् न क्रियते प्रियः जनः कोऽपि । प्रियसंगो येन कृतः दुःखेभ्यः समर्पितः आत्मा ॥ १३ ॥

पृच्छ्यते शरीरवताम् । पतितस्य दहनराशौ दग्धोऽसि न वेति कः प्रश्नः ? ॥ २० ॥ अहह गृही क नु कुशली वद्धा संसारसागरे क्षिप्तः । यदि यत लभते पोतं तेनापि निमज्जते सुतराम् ॥ २१ ॥ कुसलु म पुच्छिसि ससिवयणि! हाणि विहाणि विहाणि । इक्कि वासरु नितू गलइ, कुगिइ कुगिई भाणि ॥ २२ ॥ ताऊ कुसलु न पुच्छिअइ, हाणि विहाणि विहाणि । जर आवइ जुव्वणु गलइ, नित्तु न वल्लइ भाणि ॥ २३ ॥

## शरीरासारत्वसूक्तानि १५

नित्यमित्रसमं देहं, स्वजनाः पर्वसन्निभाः । नमस्कारसमो ज्ञेयो, धर्मः परमबान्धवः ॥ १ ॥ यत्प्रातः संस्कृतं धान्यं, मध्याह्ने तद्विनश्यति । तदीयरसनिष्पन्ने, काये का नाम सारता ? ॥ २ ॥ सुस्वादून्यन्नपानानि, क्षीरेक्षुविकृती अपि । भुक्तानि यत्र विष्ठायै, तच्छरीरं कथं शुचि ? ॥ ३ ॥ इदं शरीरं कर्पूरकस्तूरीप्रभृतीन्यपि । दूषयत्येव पाथोदपाथांस्यूपरभूरिव ॥४॥ अभ्यक्तोऽपि विलिप्तोऽपि, धौतोऽपि घटकोटिभिः । न याति शुचितां कायः, शुण्डाघट इवाशुचिः ॥ ५ ॥ कृमयो भस्म विष्ठा वा, निष्ठा यस्येयमीदृशी । स कायः परपीडाभिर्धार्यत इति को नयः ? ॥ ६ ॥ अमेध्यपूर्णे कृमिजालसंकुले, स्वभावदुर्गंध अशौच अध्रुवे(गन्धिनि शौचवर्जिते) । कलेवरे मूत्रपुरीषभाजने, रमन्ति मूढा विरमन्ति पण्डिताः ॥ ७ ॥ इदं शरीरं परिणामदुर्बलं, पतत्यवश्यं श्लथसंधिजर्जरम् । किमौषधैः क्लिश्यसि ? मूढ दुर्मते !, निरामयं धर्मरसायनं पिब ॥ ८ ॥ कस्तूरी पृषतां रदाः करटिनां कृत्तिः पशूनां पयो, धेनूनां छदमण्डलानि शिखिनां रोमाण्यवीनामपि । पुच्छस्नायुवसाविषाणनखरस्वेदादिकं किञ्चन, स्यात्कस्याप्युपकारि मर्त्यवपुषो नामुष्य किञ्चित्पुनः ॥ ९ ॥

अनुशास्तिद्वारं १४ श्लो. २३
शरीरासारत्वद्वारं १५ श्लो. ९

॥ १४ ॥

फमुफा- वत्यां ॥ १४ ॥

आहारोऽपि न रोचेत, किमुताऽकृत्यकारिता ? ॥ १ ॥ अद्यैव हसितं मस्तकस्थायिनं मृत्युं, यदि पश्येदयं जनः । संपदो जलतरङ्गविलोला, यौवनं गीतं, क्रीडितं यैः शरीरिभिः । अद्यैव ते न दृश्यन्ते, कष्टं कालस्य चेष्टितम् ॥ २ ॥ स्वप्ने यथाऽयं पुरुषः प्रयाति, त्रिचतुराणि दिनानि । शारदाभ्रमिव चञ्चलमायुः, किं धनैः ? कुरुत धर्ममनिन्द्यम् ॥ ३ ॥ चेतोहरा युवतयः ददाति गृह्णाति करोति वक्ति । निद्राक्षये तच्च न किञ्चिदस्ति, सर्वं तथेदं हि विचार्यमाणम् ॥ ४ ॥ संमीलने नयनयोर्न हि स्वजनोऽनुकूलः, सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः । वल्गन्ति दन्तिनिवहास्तरलास्तुरङ्गाः, किञ्चिदस्ति ॥ ५ ॥ चला विभूतिः क्षणभङ्गि यौवनं, कृतान्तदन्तान्तरवर्त्ति जीवितम् । तथाप्यवज्ञा परलोकसाधने, अहो नृणां विस्मयकारि चेष्टितम् ॥ ६ ॥ अनित्यमारोग्यमनित्ययौवनं, विभूतयो जीवितमप्यनित्यम् । अनित्यताभिः प्रहतस्य जन्तोः, कथं रतिः कामगुणेषु जायते ? ॥ ७ ॥ श्रियो विद्युल्लोलाः कतिपयदिनं यौवनमिदं, सुखं दुःखाघ्रातं वपुरनियतं व्याधिविधुरम् । दुरापाः सत्सङ्ग्यो बहुभिरथवा किं ? प्रलपितैरसारः संसारस्तदिह निपुणं जागृत जनाः ! ॥ ८ ॥ भवारण्यं भीमं तनुगृहमिदं छिद्रबहुलं, बली कालश्चौरो नियतमसिता मोहरजनी । गृहीत्वा ज्ञानासिं विरतिफलकं शीलकवचं, समाधानं कृत्वा स्थिरतरदृशो जागृत जनाः ! ॥ ९ ॥ घनापायः कायः प्रकृतिचपला श्रीरपि चला, महारोगा भोगाः कुवलयदृशः सर्पसदृशाः । गृहावासः पाशः प्रणयिषु सुखं स्थैर्यविमुखं, असारः संसारस्तदिह निपुणं जागृत जनाः ! ॥ १० ॥ आयुर्वारितरङ्गभङ्गुरतरं श्रीस्तूलतुल्यस्थितिस्तारुण्यं करिकर्णचञ्चलतरं स्वप्नोपमाः संगमाः । यच्चान्य-

द्रमणीमणिप्रभृतिकं वस्त्वस्ति तच्चास्थिरं, विज्ञायेति विधीयतामयमतो धर्मः सदा शाश्वतः ॥ ११ ॥ जन्मेदं न चिराय भूरिभयदा लक्ष्म्योऽपि नैव स्थिराः, किम्पाकान्तफला नितान्तकटवः कामाः क्षणध्वंसिनः । आयुः शारदमेघचञ्चलतरं ज्ञात्वा तथा यौवनं, हे लोकाः ! कुरुताऽऽदरं प्रतिदिनं धर्मेऽघविध्वंसिनि ॥ १२ ॥ भोगास्तुङ्गतरङ्गभङ्गचपलाः प्राणाः क्षणध्वंसिनः, स्तोकान्येव दिनानि यौवनसुखं प्रीतिः प्रियेष्वस्थिरा । तत्संसारमसारमेव निखिलं बुद्ध्वाऽऽत्मपापक्षये, लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥ १३ ॥ ब्रह्मपुरन्दरसप्तसमुद्रा, अष्टकुलाचलदिनकररुद्राः । नष्टा यत्र विचित्रापायः, स्थास्यति तत्र कथं मम कायः ? ॥ १४ ॥ कदलीगर्भविचारासारस्तरुगिरिसागरनगरविहारः । न त्वं नाहं नायं लोकः, केन किमर्थं क्रियते शोकः ? ॥१५॥ दिवसरजन्यौ सायं प्रातः, शिशिरवसन्तौ पुनरायातः । कालः क्रीडति गच्छत्यायुर्विरमति नायमविद्यावायुः ॥ १६ ॥ आत्मसुखार्थं क्रियते भोगः, पश्चादेव शरीरे रोगः । रोगे जाते मरणं मरणं, तदपि न मुञ्चन्ति पापाचरणम् ॥ १७ ॥ अज्जं कल्लं परं परारि पुरिसा चिंतंति अत्थसंपत्तिं । अंजलिकयं व तोयं गलंत जीअं न पिच्छन्ति ॥ १८ ॥

## शोकापनयनसूक्तानि १७

ॐमिति पण्डिताः कुर्युरश्रुपातं च मध्यमाः । अधमाश्च शिरोघातं, शोके धर्म विवेकिनः ॥१॥ जातस्य हि ध्रुवं मृत्युर्ध्रुवं



---

१ अद्य कल्यः परश्वः परारि पुरुषाश्चिन्तयन्त्यर्थसंपत्तिम् । अञ्जलिकृतं तोयमिव क्षरज्जीवितं न पश्यन्ति ॥ १८ ॥

जन्म मृतस्य च । तस्मादपरिहार्येऽर्थे, का तत्र परिदेवना ? ॥ २ ॥ संयोगाः स्युर्वियोगान्ता, विपत्सीमाश्च संपदः । स्वादानन्दो विषादान्तो, मरणान्ता जनिर्ध्रुवम् ॥ ३ ॥ वज्रकायशरीराणामर्हतां यद्यनित्यता । कदलीसारतुल्येषु, का कथा शेषजन्तुषु ? ॥ ४ ॥ अत्र द्रोणशतं दग्धं, पाण्डवानां शतत्रयम् । दुर्योधनसहस्रं च, कर्णसंख्या न विद्यते ॥ ५ ॥ जलधिरत्रासि विपत्तिसंयुता, न कोऽप्युपायोऽस्त्यमृतौ शरीरिणाम् । सर्वेक्षिते चाध्वनि सर्वदावहे, ध्रुवे शुचा किं ? मुहुर्नं विधीयते ॥ ६ ॥ देहे गेहे नवश्रोत्रबिले रोगोरगान्विते । तदन्तः पतितप्राणसार्थस्य कुशलं कुतः ? ॥७॥ उच्छ्वासाधयः प्राणाः, स चोच्छ्वासः समीरणः । समीरणाचलं नान्यद्यज्जीवति तदद्भुतम् ॥ ८ ॥ मरणं प्रकृतिः शरीरिणां, विकृतिर्जीवितमुच्यते बुधैः । क्षणमप्यवतिष्ठते श्वसन्, यदि जन्तुर्ननु लाभवानसौ ॥ ९ ॥ रुदता कुत एव सा पुनर्न शुचा नानुमृतापि लभ्यते । परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ॥ १० ॥ अवगच्छति मूढचेतनः, प्रियनाशं हृदि शल्यमर्पितम् । स्थिरधीस्तु तदेव मन्यते, कुशलोद्धारतया समुद्धृतम् ॥ ११ ॥ स्वशरीरशरीरिणावपि, स्मृतसंयोगविपर्ययौ यदा । विरहः किमिवानुतापयेद्, वद बाह्यैर्विषयैर्विपश्चितम् ॥ १२ ॥ न पृथग्जनवत् शुचो वशं, वशिनामुत्तम ! गन्तुमर्हसि । द्रुमसानुमतां किमन्तरं, यदि वायौ द्वितयेऽपि ते चलाः ॥ १३ ॥ क्रियतां नाम शोकोऽयं, यदि शोकपरो जनः । गतं प्रत्यानयेत्तं वा, प्रस्थितं विनिवारयेत् ॥ १४ ॥ यत्र वेश्मनि नो कोऽपि, मृतः पूर्वं ततोऽधुना । भृशमानीयतां रक्षा, जीवयामो यथा तया ॥ १५ ॥ गतं जीर्णमिदं देहं, लभ्यते च पुनर्नवम् । नरस्य कृतपुण्यस्य, मृत्युरेव रसायनम् ॥ १६ ॥ धर्मपराणां पुंसां जीवितमरणे सदैव कल्याणे । इह जीवतां विवेकः सद्गति-

गमनं मृतानां च ॥ १७ ॥ सदा सदाचारपरायणात्मनां, विवेकधाराशतधौतचेतसाम् । जिनोदितं पण्डित मृत्युमीयुषां, न जातु शोच्यं महतां महीतले ॥ १८ ॥ [1]नहु होइ सोइअव्वो जो कालगओ दढं समाहीए । सो होइ सोइअव्वो तवसंजमदुब्बलो जो उ ॥ १९ ॥ अर्हद्भक्तिमतां गुरुस्मृतिजुषां क्रोधादिशत्रुद्विषां, भक्त्या पञ्चनमस्कृतिं च जपतामाज्ञाविधिं तन्वताम् । इत्थं सिद्धिनिबन्धनोद्यतधियां पुंसां यशःशालिनां, श्लाघ्यो मृत्युरपि प्रणष्टरजसां पर्यन्तकालागतः ॥ २० ॥ त्यक्त्वा पुत्रधनादिमोहममतां कृत्वाऽन्तिमालोचनामुच्चार्य व्रतमालिकामनशनं चादाय वीतस्पृहः । सर्वप्राणिषु निष्कषायहृदयः कृत्वा त्रिधा क्षामणां, धन्यः पञ्चनमस्कृतिस्मृतिपरः कोऽपि त्यजेत्स्वं वपुः ॥ २१ ॥ पुमानत्यन्तमेधावी, त्रयाणां फलमश्नुते । अल्पायुरनपत्यो वा, दरिद्रो वा न संशयः ॥ २२ ॥ सृजति तावदशेषगुणालयं, पुरुषरत्नमलंकरणं भुवः । तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥ २३ ॥ परिहरति न मृत्युः पण्डितं श्रोत्रियं वा, धनकनकसमृद्धं बाहुवीर्यं नृपं वा । तपसि निरतमेतं सुस्थितं दुःस्थितं वा, वनगत इव वह्निः सर्वभक्षी कृतान्तः ॥ २४ ॥ गर्भस्थं जायमानं शयनतलगतं मातुरुत्सङ्गसंस्थं, बालं वृद्धं युवानं परिणतवयसं विश्वमार्यं खलं वा । वृक्षाग्रे शैलशृङ्गे नभसि पथि जले कोटरे पञ्जरे वा, पाताले वा प्रविष्टं हरति च सततं दुर्निवार्यः कृतान्तः ॥ २५ ॥ गर्भे जन्मनि बाल्ये च, यौवने वार्द्धकेऽपि च । जन्तोर्जीवितरत्नानि, हरते कालतस्करः ॥ २६ ॥ दिव्यज्ञानयुता जगत्रयनुता येऽनन्तवीर्या जिना, देवेन्द्राः सुरवृन्दवन्द्यचरणाः सद्विक्रमाश्चक्रिणः । वैकुण्ठा बलशालिनो हलधरा ये रात्र-

[1] नैव भवति शोचितव्यो यः कालगतो दृढसमाधिना । स भवति शोचितव्यस्तप.संयमदुर्बलो यस्तु ॥ १९ ॥

णाद्याः परे, ते कीनाशमुखं विशन्त्यशरणा यद्वा न लङ्घ्यो विधिः ॥ २७ ॥ ये पातालनिवासिनोऽसुरगणा ये स्वैरिणो
व्यन्तरा, ये ज्योतिष्कविमानवासिविबुधास्तारान्तचन्द्रादयः । सौधर्मादिसुरालयेषु सुखिनो ये चापि वैमानिकास्ते सर्वेऽपि
कृतान्तवासमवशा गच्छन्ति किं शोच्यते ? ॥ २८ ॥ बद्धा येन दिनाधिपप्रभृतयो मञ्चस्य पादे ग्रहाः, सर्वे येन कृताः
कृताञ्जलिपुटाः शक्रादिदिक्पालकाः । लङ्का यस्य पुरी समुद्रपरिखा सोऽप्यायुषः संक्षये, कष्टं विष्टपकण्टको दशमुखो
दैवाद्गतः पंचताम् ॥ २९ ॥ तित्थयरा गणहारी सुरवइणो चक्किकेसवा रामा । संहरिया हयविहिणा सेसजिएसुं च का
गणना ? ॥ ३० ॥ फट्टा तुट्टा व इहं पडमाई संठवंति नयनिउणा । सा कावि नत्थि नीई संधिज्जइ जीविअं जीए ॥ ३१ ॥
नो विद्या न च भेषजं न च पिता नो बान्धवा नो सुता, नाभीष्टा कुलदेवता न जननी स्नेहानुबन्धान्विता । नार्थो न
स्वजनो न वा परिजनः शारीरिकं नो बलं, नो शक्ताः सततं सुरासुरवराः संधातुमायुः क्षमाः ॥ ३२ ॥ आः कष्टं प्रति-
पालय त्रिजगतीनाथ ! प्रसद्य क्षणं, यत्तीर्थं न विबाधते तव दृशा निस्तेजितो भस्मकः । इत्युक्ते हरिणा जगाद य इदं
कस्यापि नैतद्भवेत्, स श्रीवीरजिनः प्रणष्टवृजिनः पुष्णातु वः संपदम् ॥ ३३ ॥ हंहो शक्र ! सुरालयश्चलति चेत्प्राचीं परित्यज्य
चेदादित्योऽप्युदयं प्रयाति जलधिः सीमां च चेन्मुञ्चति । आयुर्न त्रुटितं तथापि भुवने संधातुमत्र क्षमः, कोऽप्येवं क्षण-
मेकमाह भगवान् श्रीवर्द्धमानः प्रभुः ॥ ३४ ॥ मङ्गलैः कौतुकैर्योगैर्विद्यामन्त्रैस्तथौषधैः । न शक्ता मरणात्त्रातुं, सेन्द्रा

१ तीर्थंकरा गणधराः सुरपतयश्चक्रिकेशवबलदेवाः । संहृता हतविधिना शेषजीवेषु च का गणना ? ॥ ३० ॥ पाटितास्त्रुटिता येह पटादयः नयनि-
पुणैः सस्थाप्यन्ते । सा काऽपि नास्ति नीतिः यया जीवितं संधीयते ॥ ३१ ॥

देवगणा अपि ॥ ३५ ॥ लङ्केशः क स केशवः क स नलः क्वासौ क ते पाण्डवाः, क्वासौ दाशरथिः क तत्कुरुशतं ते शक्रचक्रायुधाः । नाभेयप्रमुखाः क ते जिनवरास्तत्सर्वसाधारणं, नन्वेतन्मरणं न तत्र शरणं कश्चित्कचित्कस्यचित् ॥ ३६ ॥ वयं जाता येभ्यश्चिरमुपगता एव खलु ते, समं यैः संवृद्धाः स्मरणपदवीं तेऽपि च गताः । इदानीमेते स्मः प्रतिदिनसमासन्नविगमा, गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ३७ ॥ पान्थानामिव वर्त्मनि क्षितिरुहां नद्यामिव भ्रस्यतां, मेघानामिव पुष्करे जलनिधौ सांयात्रिकाणामिव । संयोगः पितृमातृबन्धुतनयभ्रातृप्रियाणां यदा, सिद्धो दूरवियोग एव विदुषां शोकोदयः कस्तदा ? ॥ ३८ ॥

## विधिविषयसूक्तानि १८

'विधिर्विधाता नियतिः स्वभावः, कालो ग्रहाश्चेश्वरकर्मदैवम् । भाग्यानि पुण्यानि यमः कृतान्तः, पर्यायनामानि पुराकृतस्य ॥ १ ॥ करोमि न करोमीति, चेतः! किं परितप्यसे ? । संपत्तौ च विपत्तौ च, विधिरेव समुत्सुकः ॥ २ ॥ सघृतं मन्त्रपूतं च, भोज्यं काकस्य निर्मितम् । शेवालं राजहंसस्य, विधिना पङ्किलं कृतम्, ॥ ३ ॥ भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा, कृत्वाऽऽखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः । तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा, स्वस्थास्तिष्ठत दैवमेव हि नृणां दुःखे सुखे कारणम् ॥ ४ ॥ येनोदितेन कमलानि विकासितानि, तेजांसि येन निखिलानि निराकृतानि । येनान्धकारनिकरप्रसरो निरुद्धः, सोऽप्यस्तमाप हतदैववशाद्दिनेशः ॥ ५ ॥

रिक्तोऽहमर्थैरिति मा विषीद, पूर्णोऽहमर्थैरिति मा प्रसीद । रिक्तं च पूर्णं भरितं च रिक्तं, करिष्यतो नास्ति विधेर्वि-
लम्बः ॥ ५ ॥ अन्यथा चिंतितं कार्यमन्यथैव हि जायते । बलवान् विधिरेवात्र, कार्या नैव विचारणा ॥ ६ ॥ कुमुद-
वनमपश्रि श्रीमदम्भोजखण्डं, त्यजति मदमुलूकः प्रीतिमांश्चक्रवाकः । उदयमहिमरश्मिर्याति शीतांशुरस्तं, हतविधिललितानां
ही विचित्रो विपाकः ॥ ७ ॥ जं चिअ विहिणा लिहिअं तं चिअ परिणमइ सयललोयस्स । इअ जाणिऊण धीरा विहुरेवि
न कायरा हुंति ॥ ८ ॥ जं विहि करइ स होइ होइ न जं जिअ चिंतवइ । इमइ चींत पलीत आहट दोहट चींतवइ
॥ ९ ॥ यत्सलोरथयतैरगोचरं, यत्स्पृशन्ति न गिरः कवेरपि । स्वप्नवृत्तिरपि यत्र दुर्लभा, लीलयैव विदधाति तद्विधिः
॥ १० ॥ अघटितघटितानि घटयति, सुघटितघटितानि जर्जरीकुरुते । विधिरेव तानि घटयति, यानि पुमान्नैव चिन्त-
यति ॥ ११ ॥ छित्त्वा पाशमपास्य कूटरचनां भंक्त्वा बलाद्वागुरां, पर्यन्ताग्निशिखाकलापजटिलान्निर्गत्य दूरं वनात् ।
व्याधानां शरगोचराण्यतिजवेनोल्लंघ्य धावन् मृगः, कूपान्तः पतितः करोतु विधुरे किं वा विधौ पौरुषम्? ॥ १२ ॥
यन्नाम धनुरीश्वरस्य शिशुना यज्जामदग्न्यो जितस्त्यक्ता येन गुरोर्गिरा वसुमती बद्धो यदम्भोनिधिः । एकैकं दशकन्ध-
रस्य क्षयकृद्रामस्य किं वर्ण्यते ?, दैवं वर्णय येन सोऽपि सहसा नीतः कथाशेषताम् ॥ १३ ॥ जेता यस्य बृहस्पतिः
प्रहरणं वज्रं सुराः किङ्कराः, स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावणो वाहनम् । इत्याश्चर्यबलान्वितोऽपि बलभिद्भग्नः परैः
संगरे, तद्युक्तं ननु दैवमेव शरणं धिग् धिग् वृथा पौरुषम् ॥ १४ ॥ ध्वांतं ध्वस्तं समस्तं विरहविगमनं चक्रवाकेषु चक्रे,

१ यदेव विधिना लिखितं तदेव परिणमति सकललोकस्य । इति ज्ञात्वा धीरपुरुषाः विधुरेऽपि न कातरा भवन्ति ॥ ८ ॥ २ पङ्गुराः

संकोचं मोचितं द्राग्वरकमलवनं धाम लुप्तं ग्रहाणाम् । संप्राप्तोऽर्थो जनेभ्यस्तदनु च निखिला येन भुक्ता दिनश्रीः, संप्रत्यस्तं गतोऽसौ हतविधिवशतः शोचनीयो न भानुः ॥ १५ ॥ निदाघे संतप्तः प्रचुरतरतृष्णातुरमनाः, सरः पूर्णं दृष्ट्वा त्वरितमुपयातः करिवरः। तथा पङ्के मग्नस्तटनिकटवर्तिन्यपि यथा, न नीरं नो तीरं द्वयमपि विनष्टं विधिवशात् ॥१६॥ स्फुरन्त्युपायाः शान्त्यर्थमनुकूले विधातरि । प्रतिकूले पुनर्यान्ति, तेऽप्युपाया अपायताम् ॥ १७ ॥ स्थानं त्रिकूटः परिखा समुद्रो, रक्षांसि योद्धा धनदाच्च वित्तम् । संजीवनी यस्य मुखे च विद्या, स रावणः कालवशाद्विपन्नः ॥ १८ ॥ वैदेहीदयितेऽपि दुष्टहृदयः पार्थेऽप्यनर्थप्रदो, जीमूतेऽपि यथोचितव्यवहृतिः कर्णेऽपि कर्णेजपः । भीमो भीमसुतापतावपि हरिश्चन्द्रेऽपि रौद्राशयः, शक्रेऽपि श्रितवक्रिमा हतविधिर्यस्तस्य केऽमी वयम् ? ॥ १९ ॥ ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे, रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः । विष्णुर्येन दशावतारगहने क्षिप्तो महासंकटे, सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ २० ॥ इह खलु विषमः पुराकृतानां, भवति हि जन्तुषु कर्मणां विपाकः । हरशिरसि शिरांसि यानि रेजुर्हरहर तानि लुठन्ति गृध्रपादे ॥ २१ ॥ यत्र मृत्युर्यतो दुःखं, यत्र श्रीर्यत्र बन्धनम् । तत्र तत्र स्वयं याति, प्रेर्यमाणः स्वकर्मभिः ॥ २२ ॥ शशिनि खलु कलङ्कं कण्टकाः पद्मनाले, जलधिजलमपेयं पण्डिते निर्धनत्वम् । स्वजनजनवियोगो दुर्भगत्वं सुरूपे, धनवति कृपणत्वं रत्नदोषी कृतान्तः ॥ २३ ॥ नैर्मल्यं यस्य संसर्गाद्भजन्ते समला अपि । जडं तदपि कुर्वाणः, परमेष्ठी ध्रुवं जडः ॥ २४ ॥ जानन्त्येके प्रगुणितधियो धर्मकामादिशास्त्रं, जानन्त्येके निपुणमतयो वेदसिद्धान्ततत्त्वम् । जानन्त्येतत्सकलमपरे तन्न जानन्ति केचिल्लीलारब्धत्रिभु-

वनजयो जीयते येन मृत्युः ॥ २५ ॥ कस्य स्यान्न स्खलितं? पूर्णाः सर्वे मनोरथाः कस्य?। कस्येह सुखं नित्यं? दैवेन न खण्डितः को वा? ॥ २६ ॥ भ्रष्टं नृपतिकिरीटात्पतितं भूमौ तिरोहितं रजसा। विधिविलसितेन रत्नं जनचरणविडम्बनां सहते ॥ २७ ॥ जो करिवराण कुंभे पायं दाऊण मुत्तिए दलए। सो सीहो विहिवसओ जंबुअपयपिल्लणं सहए ॥ २८ ॥ एते ते मम बाहवः सुरपतेर्दोर्दण्डकण्डूहराः, सोऽहं सर्वजगत्पराभवकरो लङ्केश्वरो रावणः। सेतुं वद्धमिमं शृणोमि कपिभिः पश्यामि लङ्कां वृतां, जीवद्भिस्तु न दृश्यते किमथवा किं वा न च श्रूयते? ॥ २९ ॥ दृपद्भिः सागरो वद्ध, इन्द्रजिन्मानवैर्जितः। वानरैर्वेष्टिता लङ्का, जीवद्भिः किं न दृश्यते? ॥ ३० ॥

## कर्मसंवन्धिसूक्तानि १९

हसन्तो हेलया कर्म, तत्कुर्वन्ति प्रमादिनः। जन्मान्तरशतैरेते, शोचन्तोऽनुभवन्ति यत् ॥ १ ॥ यदत्र क्रियते कर्म, तत्परत्रोपभुज्यते। मूलसिक्तेषु वृक्षेषु, फलं शाखासु जायते ॥२॥ कर्मणो हि प्रधानत्वं, किं कुर्वन्ति शुभा ग्रहाः?। वशिष्ठदत्तलग्नोऽपि, रामः प्रव्रजितो वने ॥ ३ ॥ यत्नानुसारिणी विद्या, लक्ष्मीः पुण्यानुसारिणी। दानानुसारिणी कीर्त्तिर्वुद्धिः कर्मानुसारिणी ॥ ४ ॥ किं करोति नरः प्राज्ञः?, प्रेर्यमाणः स्वकर्मभिः। प्रायेण हि मनुष्याणां, वुद्धिः कर्मानुसारिणी ॥ ५ ॥ कृतकर्मक्षयो नास्ति, कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाशुभम् ॥ ६ ॥ यदुपात्तमन्य-

---

१ यः करिवराणां कुम्भे पादं दत्त्वा मौक्तिकानि दलयति। स सिंहो विधिवशतो जम्बूकपादप्रेरणां सहते ॥ २८ ॥

जन्मनि शुभमशुभं वा स्वकर्म परिणत्या। तच्छक्यमन्यथा नैव कर्तुं देवासुरैरपि हि ॥ ७ ॥ आरोहतु गिरिशिखरं समुद्रमुल्लङ्घ्य यातु पातालम्। विधिलिखिताक्षरमालं फलति कपालं न भूपालः ॥ ८ ॥ विधत्तां वाणिज्यं श्रयतु नरनाथं प्रविशतु, द्युलोकं पातालं व्रजतु भजतां वा धनपतिम्। अधीतां शास्त्रौघं दृढयतु तपोऽभ्यस्यतु कलाः, पुरोपात्तं कर्म स्फुरति न तथापि ह्यपरथा ॥ ९ ॥ प्रचलति यदि मेरुः शीततां याति वह्निरुदयति यदि भानुः पश्चिमायां दिशायाम्। विकसति यदि पद्मं पर्वताग्रे शिलायां, तदपि न चलतीयं भाविनी कर्मरेखा ॥ १० ॥ नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा, विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः। फलं कर्मायत्तं यदि किममरैः? किं च विधिना?, नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ ११ ॥ सुखस्य दुःखस्य न कोऽपि दाता, परो ददातीति कुबुद्धिरेषा। पुराकृतं कर्म तदेव भुज्यते, शरीरहेतोस्त्वरया त्वया कृतम् ॥ १२ ॥ यद्वज्रमयदेहास्ते, शलाकापुरुषा अपि। न मुच्यन्ते विना भोगं, स्वनिकाचितकर्मणः ॥ १३ ॥ यथा धेनुसहस्रेषु, वत्सो विन्दति मातरम्। एवं पूर्वकृतं कर्म, कर्त्तारमनुधावति ॥ १४ ॥ पत्ते वसंतमासे रिद्धिं पावंति सयलवणराई। जं न करीरे पत्तं ता किं दोसो वसंतस्स? ॥ १५ ॥ उइअंमि सहस्सकरे सलोयणो पिच्छइ सयललोओ। जं न उलूओ पिच्छइ सहस्सकिरणस्स को दोसो? ॥ १६ ॥ नैवाकृतिः फलति नैव कुलं न शीलं, विद्यापि नैव न च जन्मकृतापि सेवा। कर्माणि पूर्वतपसा किल सञ्चितानि, काले

१ प्राप्ते वसन्तमासे ऋद्धिं प्राप्नोति सकला वनराजिः। यत्र करीरे पत्रं तत्किं दोषो वसन्तस्य? ॥ १५ ॥ २ उदिते सहस्रकरे सलोचनः पश्यति सकललोकः। यत् न उलूकः पश्यति, सहस्रकिरणस्य को दोषः? ॥ १६ ॥

फलन्ति पुरुषस्य यथेह वृक्षाः ॥ १७ ॥ अकारणं सत्त्वमकारणं तपो, जगत्रयव्यापि यशोऽप्यकारणम् । अकारणं रूपमकारणं गुणाः, पुराणमेकं नृप कर्म कारणम् ॥ १८ ॥ वैद्या वदन्ति कफपित्तमरुद्विकारं, नैमित्तिका ग्रहकृतं प्रवदंति दोषम् । भूतोपसर्गमथ मन्त्रविदो वदन्ति, कर्मैव शुद्धमतयो यतयो गृणन्ति ॥ १९ ॥ मनसा मानसं कर्म, वचसा वाचिकं तथा । कायेन कायिकं तद्वन्निस्तरन्ति मनीषिणः ॥ २० ॥ जानामि पापं न च मे निवृत्तिर्जानामि पुण्यं न च मे प्रवृत्तिः । केनापि भूतेन हृदि स्थितेन, व्यादिश्यते यत्तदहं करोमि ॥ २१ ॥ गंयणंमि गहा सयणंमि सुवयणा सउणया वणग्गेसु । तह वाहरंति पुरिसं जह दिट्ठं पुव्वकम्मेहिं ॥ २२ ॥ कत्थइ जीवो वलवं कत्थइ कम्माइं हुंति वलिआइं । जीवस्स य कम्मस्स य पुव्वनिवद्धाइं वेराइं ॥ २३ ॥

## भाग्योपक्रमसंवन्धिसूक्तानि २०

महतां स्थानसङ्गेऽपि, फलं भाग्यानुमानतः । ईश्वरकण्ठलग्नोऽपि, वासुकिर्मारुताशनः ॥ १ ॥ तावत्तेजस्विनां तेजो, यावद्भाग्यमभङ्गुरम् । क्षीणतैलः कियत्कालं, प्रदीपोऽपि प्रदीप्यते ॥ २ ॥ प्रभवेत्सरभोगाय, सर्वस्य दिवसो निजः । दीपैरपि परोलक्षैर्न हि दीपोत्सवोऽन्यदा ॥ ३ ॥ उद्यमं कुर्वतां पुंसां, भाग्यं सर्वत्र कारणम् । समुद्रमथनाल्लेभे, हरिर्लक्ष्मीं हरो विषम् ॥४॥ सायर तुज्झ न दोसो दोसो अम्हाण चेव कम्माणं । रयणायरंमि भरिए सालूरो हत्थि मे लग्गो ॥ ५ ॥

१ गगने ग्रहाः स्वजने सुवचनाः शकुनयो वनाग्रे । तथा व्याहरन्ति पुरुषं यथा दृष्टं पूर्वकर्मभिः ॥ २२ ॥ कुत्रचिजीवो वलवान् क्वचित्कर्माणि भवन्ति वलवन्ति । जीवस्य च कर्मणश्च पूर्वनिबद्धानि वैराणि ॥ २३ ॥ २ सागर ! तव न दोषो दोषोऽस्माकमेव कर्मणाम् । रत्नाकरे भृते दर्दुरो हस्ते मे लग्नः ॥५॥

दैवमुलङ्घ्य यत्कार्यं, क्रियते फलवन्न तत् । सरोऽम्भश्चातकेनात्तं, गलरन्ध्रेण गच्छति ॥ ६ ॥ दैवेन प्रभुणा स्वयं जगति यद् यस्य प्रमाणीकृतं, तत्तस्योपनयेन्मनागपि सदा नैवाश्रयः कारणम् । सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं, सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः ॥ ७ ॥ यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं, तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ च नातोऽधिकम् । तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः, कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥ ८ ॥ विदेशान्तरितस्यापि, भाग्यं जागर्त्ति तद्गतः । अभ्रैस्तिरोहितस्यापि, भानोर्भासस्तमोपहाः ॥ ९ ॥ उद्यमः साहसं धैर्यं, बलं बुद्धिपराक्रमौ । षडेते यस्य विद्यन्ते, तस्य दैवोऽपि शङ्कते ॥ १० ॥ अनिर्विण्णः श्रियो मूलं, लोहबद्धा च कुण्डिका । दीर्घाण्यप्यहोरात्राणि, समुद्रः किं न शुष्यति ? ॥ ११ ॥ न श्रीः कुलक्रमायाता, शासने लिखिता न वा । खड्गेनाऽऽक्रम्य भुञ्जीत, वीरभोग्या वसुन्धरा ॥ १२ ॥ नाभिषेको न संस्कारः, सिंहस्य क्रियते मृगैः । विक्रमार्जितसत्त्वस्य, स्वयमेव मृगेन्द्रता ॥ १३ ॥ न्यक्कारमुपकारं वा, रुष्टस्तुष्टश्च यो नरः । न कर्त्तुमलमन्येभ्यः, स किं केनाप्यपेक्षते ? ॥ १४ ॥ तावद्भयस्य भेतव्यं, यावद्भयमनागतम् । आगतं तु भयं दृष्ट्वा, प्रहर्त्तव्यमशङ्कितैः ॥ १५ ॥ उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवं न दैवमिति कापुरुषा वदन्ति । दैवं निहत्य कुरु पौरुषमात्मशक्त्या, यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ? ॥ १६ ॥ निद्रालस्यसमेतानां, क्लीबानां क्व विभूतयः ? । सुसत्त्वोद्यमसाराणां, श्रियः पुंसां पदे पदे ॥ १७ ॥ औषधं मन्त्रवादं च, नक्षत्रं गृहदेवता । भाग्यकाले प्रसीदन्ति, अभाग्ये यान्ति विक्रियाम् ॥ १८ ॥ सेवितोऽपि चिरं स्वामी, विना पुण्यं न तुष्यति । भानोराजन्मभक्तोऽपि, पश्य निश्चरणो-

ऽरुणः ॥ १९ ॥ श्रियमनुभवन्ति धीरा न भीरवः किमपि पश्य शस्त्रहतः । कर्णः स्वर्णालङ्कृतिरञ्जनरेखाङ्कितं चक्षुः ॥ २० ॥ पौष्पाः पञ्च शराः शरासनमपि ज्याशून्यमक्ष्णोर्लता, जेतव्यं च जगत्त्रयं प्रतिदिनं जेताऽप्यनङ्गः किल । ईदृक्षेऽपि वशीकृतं त्रिभुवनं जानेऽस्मि तत्कारणं, तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ? ॥ २१ ॥ दीपे प्रज्वलिते प्रणश्यति तमः किं दीपमात्रं तमो, वज्रेणाभिहताः पतन्ति गिरयः किं वज्रमात्रा नगाः ? । हस्ती स्थूलतनुः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशः, तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ? ॥ २२ ॥ सत्तु सरीरायत्तुं दैवायत्ती रिद्धि । इफलउ वहुहिं भिडइ जहिं साहसु तहिं सिद्धि ॥ २३ ॥ खेडि म खूंटा दालि खूटा विणु खीखइ नहि । साहसि हुतउं हलु वहइ दैवतणइ कपालि ॥ २४ ॥ देवस्स मत्थए पाडिऊण सव्वं सहंति कापुरिसा । देवोऽपि ताण संकइ, जेसिं तेओ परिप्फुरइ ॥ २५ ॥ घरि सूरा मढि पंडिआ पुहवी पुरिसा न मंति । ते विरला जे सामिअह अवसरि नवि चुकंति ॥ २६ ॥

## भविष्यसंबन्धिसूक्तानि २१

न स प्रकारः कोऽप्यस्ति, येनेयं भवितव्यता । छायेव निजदेहस्य, लङ्घ्यते जातु जन्तुभिः ॥ १ ॥ सा सा संपद्यते बुद्धिः, सा मतिः सा च भावना । सहायास्तादृशा ज्ञेया, यादृशी भवितव्यता ॥ २ ॥ न स मन्त्रो न सा बुद्धिर्न स दोष्णां पराक्रमः । अपुण्योपस्थितं येन, व्यसनं प्रतिहन्यते ॥ ३ ॥ अवश्यं भाविनो भावा, भवन्ति महतामपि । नग्नत्वं नीलकण्ठस्य, महाऽहिशयनं हरेः ॥ ४ ॥ पातालमाविशतु यातु सुरेन्द्रलोकमारोहतु क्षितिधराधिपतिं सुमेरुम् । मन्त्रौ-

पद्यैः प्रहरणैश्च करोतु रक्षां, यद्भावि तद्भवति नात्र विचारहेतुः ॥ ५ ॥ गते शोको न कर्त्तव्यो, भविष्यं नैव चिन्तयेत् । वर्त्तमानेन योगेन, वर्त्तन्ते हि विचक्षणाः ॥ ६ ॥ अमुत्र भविता यत्ते, तच्चिन्तय शुभाशुभम् । इह ते कर्मणामेव, विपाकश्चिन्तयिष्यति ॥ ७ ॥ क्षणेन लभ्यते यामो, यामेन लभ्यते दिनम् । दिनेन लभ्यते कालः, कालः कालो भविष्यति ॥८॥ कालः पचति भूतानि, कालः संहरते प्रजाः । कालः सुप्तेषु जागर्त्ति, कालो हि दुरतिक्रमः ॥ ९ ॥ कालः समविषमकरः परिभवसन्मानकारकः कालः । कालः करोति पुरुषं दातारं याचितारं वा ॥ १० ॥

## विमर्शसूक्तानि २२

पुष्पैरपि न योद्धव्यं, किं पुनर्निशितैः शरैः ? । युद्धे विजयसंदेहः, प्रधानपुरुषक्षयः ॥ १ ॥ अङ्कमारुह्य सुप्तस्य, हन्तुः किं नाम पौरुषम् । विश्वासप्रतिपन्नानां, वञ्चने का विदग्धता ? ॥ २ ॥ सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणते हि विमृश्यकारिणं, गुणलुब्धाः स्वयमेव संपदः ॥ ३ ॥ सगुणमपगुणं वा कुर्वता कार्यमादौ, परिणतिरवधार्या यत्नतः पण्डितेन । अतिरभसकृतानां कर्मणामाविपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ४ ॥ यदपसरति मेषः कारणं तत्प्रहर्तुं, मृगपतिरपि कोपात्संकुचत्युत्पतिष्णुः । हृदयनिहितवैरा गूढमन्त्रप्रचाराः, किमपि विगणयन्तो बुद्धिमन्तः सहन्ते ॥ ५ ॥ कर्मायत्तं फलं पुंसां, बुद्धिः कर्मानुसारिणी । तथापि सुधिया भाव्यं, सुविचार्यैव कुर्वता ॥ ६ ॥ सर्वथा सर्वकार्येषु, माध्यस्थ्यं शस्यते नृणाम् । दन्तपातः कथं न स्यादतिकर्पूरभक्षणात् ॥ ७ ॥ शल्यवह्निविषादीनां, सुकरैव प्रतिक्रिया । सहसाकृतकार्योत्थाऽनुतापस्य तु नौषधम् ॥ ८ ॥ तरुदाहोऽतिशीतेन, दुर्भिक्षमतिवर्षणात् ।

अतित्यागादनौचित्यमति सर्वत्र गर्हितम् ॥ ९ ॥ जीवन् भद्राण्यवाप्नोति, जीवन् पुण्यं करोति च । मृतस्य देहनाशः स्याद्धर्माद्युपरमस्तथा ॥ १० ॥

## संहतिसूक्तानि २३

वह्नामप्यसाराणां, समुदायो जयावहः । तृणैः संजायते रज्जुर्बद्ध्यन्ते येन दन्तिनः ॥ १ ॥ गिरयो येन भिद्यन्ते, धरा येन विदार्यते । संहतेः पश्य माहात्म्यं, तृणैर्वारि निवार्यते ॥ २ ॥ कुरुते कार्यमच्छिद्रं, तृणानामपि संहतिः । तालच्छवि-
कयाऽऽदित्यः, सप्रतापोऽपि वार्यते ॥ ३ ॥ संहतिः श्रेयसी पुंसां, स्वपक्षे तु विशेषतः । तुषैरपि परिभ्रष्टा, न प्ररोहन्ति तण्डुलाः ॥ ४ ॥ गुणैः सर्वज्ञतुल्योऽपि, सीदत्येको निराश्रयः । अनर्घ्यमपि माणिक्यं, हेमाश्रयमपेक्षते ॥ ५ ॥ वह्नीं
प्रतिष्ठामाप्नोति, पञ्चभिः पूजितो नरः । उत्तमाङ्गं शिरः प्रोक्तं, पञ्चेन्द्रियनिषेवितम् ॥ ६ ॥ तत्त्वमेको द्वयोर्मन्त्रः, त्रिभि-
र्गीतं चतुःपथम् । कृषिं च पञ्चभिः कुर्यात्संग्रामं वहुभिर्जनैः ॥ ७ ॥ मुण्डे मुण्डे मतिर्भिन्ना, कुण्डे कुण्डे नवं पयः । तुण्डे तुण्डे नवा वाणी, वह्नां नैकरूपता ॥ ८ ॥ एकोदरसमुत्पन्ना, एकनक्षत्रजातकाः । न भवन्ति समाः शीलैर्यथा वदरिकण्टकाः ॥ ९ ॥ किमप्यसाध्यं महतां, सिद्धिमेति लघीयसः । प्रदीपो भूमिगेहान्तर्ध्वान्तं हन्ति न भास्करः ॥ १० ॥ लघुनि लघवः समर्था गुरुकार्ये गुरव एव कर्त्तुमलम् । हन्ति रजोऽवश्यायस्तर्पयति घनागमः पृथिवीम् ॥ ११ ॥ लघुभ्यो यादृशी कीर्त्तिर्महद्भ्यः स्यान्न तादृशी । अरण्यं समृगं स्थानं, नगरं कीटिकाश्रितम् ॥ १२ ॥

## सत्त्वसूक्तानि २४

श्रेयांसि बहुविघ्नानि, भवंति महतामपि । अश्रेयसि प्रवृत्तानां, क्वापि यान्ति विनायकाः ॥ १ ॥ प्रारभ्यते न खलु विघ्नभयेन नीचैः, प्रारभ्य विघ्नविहता विरमंति मध्याः । विघ्नैः सहस्रगुणितैरपि हन्यमानाः, प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ २ ॥ देवोऽपि शङ्कते तेभ्यः, कृत्वा विघ्नानि खिद्यते । विघ्नैरस्खलितोत्साहाः, प्रारब्धं न त्यजन्ति ये ॥ ३ ॥ सत्त्वैकतानवृत्तीनां, प्रतिज्ञातार्थकारिणाम् । प्रभविष्णुर्न देवोऽपि, किं पुनः प्राकृतो जनः? ॥ ४ ॥ सदाचारस्य धीरस्य, धीमतो दीर्घदर्शिनः । न्याय्यप्रवृत्तस्य सतः, सन्तु वा यान्तु वा श्रियः ॥ ५ ॥ अद्यापि नोज्झति हरः किल कालकूटं, कूर्मो बिभर्त्ति धरणिं किल चात्मपृष्ठे । अम्भोनिधिर्वहति दुःसहवाडवाग्निमङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ ६ ॥ अप्रार्थितानि दुःखानि, यथैवायान्ति देहिनः । सुखान्यपि तथा मन्ये, दैन्यमत्रातिरिच्यते ॥ ७ ॥ एकोऽहमसहायोऽहं, कृशोऽहमपरिच्छदः । स्वप्नेऽप्येवंविधा चिन्ता, मृगेन्द्रस्य न जायते ॥ ८ ॥ कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते सत्त्वगुणः प्रमार्ष्टुम् । अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा यान्ति कदाचिदत्र ॥ ९ ॥ अप्रकटीकृतशक्तिः शक्तोऽपि जनात्तिरस्क्रियां लभते । निवसन्नन्तर्दारुणि लङ्घ्यो वह्निर्न तु ज्वलितः ॥ १० ॥ विजेतव्या लङ्का चरणतरणीयो जलनिधिर्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः । तथाप्याजौ रामः सकलमवधीद्राक्षसकुलं, क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥११॥ घटो जन्मस्थानं मृगपरिजनो भूर्जवसनं, वने वासः कन्दैरशनमतिदुःस्थं वपुरिति । इतीदृशोऽगस्त्यो यदपिबदपारं जलनिधिं, क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ १२ ॥ रथस्यैकं चक्रं भुजगयमिताः

संहति-द्वारं २३ श्लो. १२ सत्त्व-द्वारं २४ श्लो. १४

॥ २२ ॥

रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः, क्रियासिद्धिः सत्त्वे
मस्त तुरगा, निरालम्बो मार्गश्चरणविकलः सारथिरपि । शशधरो, वसन्तः सामन्तः कुसुममिषवः सैन्य-
वसति महतां नोपकरणे ॥ १३ ॥ विपक्षः श्रीकण्ठो जडतनुरमात्यः शशधरो, वसन्तः सामन्तः कुसुममिषवः सैन्य-
मरुतः । तथापि त्रैलोक्यं जयति मदनो देहविकलः, क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ १४ ॥

## सम्पद्विपत्संबंधिसूक्तानि २५

जीअं मरणेण समं उप्पज्जइ जुव्वणं सह जराए । ऋद्धी विणाससहिआ हरिसविसाओ न कायव्वो ॥ १ ॥ दुःखे
दुःखाधिकान् पश्येत्, सुखे पश्येत्सुखाधिकान् । आत्मानं शोकहर्षाभ्यां, शत्रुभ्यामिव नार्पयेत् ॥ २ ॥ कार्यः संपदि
नानन्दः, पूर्वपुण्यभिदे हि सा । नैवापदि विषादश्च, सा हि प्राक्पापपिष्टये ॥ ३ ॥ नाऽभूम भूमिपतयः कति नाम
वारान् ?, वारानभूम कति नाम वयं न कीटाः ? । तत्संपदां च विपदां च न कोऽपि पात्रमेकान्ततस्तदलमङ्ग ! मुदा
शुचा च ॥ ४ ॥ खण्डः पुनरपि पूर्णः पुनरपि खण्डः पुनः शशी पूर्णः । संपद्विपदौ प्रायः कस्यापि न हि स्थिरे
स्याताम् ॥ ५ ॥ चंदस्स खउत्ति नहु तारयाण रिद्धीवि तस्स नहु ताण । गुरुआण चडणपडणं इअरजणा निच्च-
पडिअन्नं ॥ ६ ॥ प्रायोवृत्त्या विपदः परिहृत्यावस्तु वस्तुनि भवन्ति । न हि कोद्रवेषु कीटाः पतन्ति गोधूमराशिषु ॥ ७ ॥
आपत्स्वेव हि महतां शक्तिरभिव्यज्यते न संपत्सु । अगुरोस्तथा न गंधः प्रागस्ति यथाऽग्निपतितस्य ॥ ८ ॥ सत्त्वोत्कर्ष-

---

१ जीवितं मरणेन समं उत्पद्यते यौवनं सह जरया । ऋद्धिर्विनाशसहिता, हर्षविषादौ न कर्तव्यौ ॥ १ ॥

प्रकाशाय, भवन्ति विपदः सताम् । जायते गुणयोगाय, वज्रवेधव्यथा मणेः ॥ ९ ॥ संपदां विपदां पात्रं, सत्पात्रं प्रायशो भवेत् । पुष्पाक्षतादिबिल्वानां, संबन्धो मूर्ध्न एव हि ॥ १० ॥ आपदामापतन्तीनां, हितोऽप्यायाति हेतुताम् । मातृजङ्घापि वत्सस्य, मेधिर्भवति बन्धने ॥ ११ ॥ वनानि दहतो वह्नेः, सखा भवति मारुतः । स एव दीपनाशाय, कृशे कस्यास्ति सौहृदम्? ॥१२॥ पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः । प्रायेण हि सुवृत्तानामस्थायिन्योऽभिभूतयः ॥१३॥ सुवृत्तस्यैकरूपस्य, परप्रीत्यै कृतोन्नतेः । साधोः स्तनयुगस्येव, पतनं कस्य तुष्टये? ॥ १४ ॥ कल्याणमूर्त्तेस्तेजांसि, संपद्यन्ते विपद्यपि । किं वर्णिका सुवर्णस्य, नारोहति हुताशने? ॥ १५ ॥ महतामापदं दृष्ट्वा, को न नीचोऽपि तप्यते? । काकोऽप्यन्धत्वमायाति, गच्छत्यस्तं दिवाकरे ॥ १६ ॥ संपदि परोऽपि निजतां निजोऽपि परतामुपैति विपदि जनः । ताराभिर्व्रियते निशि रश्मिभिरपि मुच्यतेऽह्नि शशी ॥ १७ ॥ घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धि, छिन्नं छिन्नं पुनरपि पुनः स्वादुदं चेक्षुखण्डम् । तप्तं तप्तं पुनरपि पुनः काञ्चनं कान्तवर्ण, प्राणान्तेऽपि प्रकृतिविकृतिर्जायते नोत्तमानाम् ॥ १८ ॥ विपद्यपि सदा यस्य, सौमनस्यं स वन्द्यते । विपणिक्रीतमुत्फुल्लं, फुल्लं शिरसि धार्यते ॥ १९ ॥ गवादीनां पयोऽन्येद्युः, सद्यो वा दधि जायते । क्षीरोदधिस्तु नाद्यापि, महतां विकृतिः कुतः? ॥ २० ॥ सन्तो न यान्ति वैवर्ण्यमापत्सु पतिता अपि । दग्धोऽपि वह्निना शङ्खः, शुभ्रत्वं नैव मुञ्चति ॥ २१ ॥ स्वापदि तथा महान्तो न यान्ति खेदं यथा परापत्सु । अचला निजोपहतिषु प्रकम्पते भूः परव्यसने ॥ २२ ॥ उदेति सविता रक्तो, रक्त एवास्तमेति च । संपत्तौ च विपत्तौ च, महतामेकरूपता ॥ २३ ॥ दृश्यतामुदयति स्म यादृशस्तादृशस्तरणिरस्तमीयते । उत्सवव्यसनयोः प्रभुर्विधि-

विक्रियासु महतामनीश्वरः ॥ २४ ॥ शुद्धः स एव कुलजश्च स एव धीरः, श्लाघ्यो विपत्स्वपि न मुञ्चति यः स्वभावम् । तप्तं यथा दिनकरस्य मरीचिजालैर्दहं त्यजेदपि हिमं न तु शीतलत्वम् ॥ २५ ॥

सत्पुरुषसूक्तानि २६

विपदि धैर्यमथाभ्युदये क्षमा, सदसि वाक्पटुता युधि विक्रमः । यशसि चाभिरुचिर्व्यसनं श्रुतौ, प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ १ ॥ विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां, प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम् । असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यस्तनुधनः, सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम्? ॥ २ ॥ ये प्राप्ते व्यसनेऽप्यनाकुलधियः संपत्सु नैवोन्नताः, प्राप्ते नैव पराङ्मुखाः प्रणयिनि प्राणोपभोगैरपि । ह्रीमन्तः स्वगुणप्रपञ्चनविधावन्यस्तुतावुत्सुका, धिग्धात्रा कृपणेन तेऽपि न कृताः कल्पान्तदीर्घायुषः ॥ ३ ॥ स्वच्छाशयाः प्रकृत्या परहितकरणोद्यता रता धर्मे । संपदि न गर्वभाजो विपदि न मुह्यन्ति सत्पुरुषाः ॥ ४ ॥ दित्सा स्वल्पधनस्याप्यवष्टम्भः कष्टितस्य च । गतायुषोऽपि धीरत्वं, स्वभावोऽयं महात्मनः ॥ ५ ॥ संपदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् । तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ ६ ॥ यथा चित्तं तथा वाचो, यथा वाचस्तथा क्रियाः । धन्यास्ते त्रितये येषां, विसंवादो न विद्यते ॥ ७ ॥ स्पृहणीयाः कस्य न ते सततं सरलाशया महात्मानः? । त्रयमपि सदृशं येषां वचनं रचनं समाचारः ॥ ८ ॥ वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः । करणं परोपकरणं येषां केषां न ते वन्द्याः? ॥ ९ ॥ आनन्दमधुरा दृष्टिर्मनः प्रीतितरङ्गितम् । सतामेतावदौचित्यं, शेषस्त्वाचारडम्बरः ॥ १० ॥ ये शान्तदान्ताः श्रुतपूर्ण-

कर्णा, जितेन्द्रियाः प्राणिवधान्निवृत्ताः । परिग्रहे संकुचिता गृहस्थास्ते ब्राह्मणास्तारयितुं समर्थाः ॥ ११ ॥ येषां मनांसि करुणारसरञ्जितानि, येषां वचांसि परदोषविवर्जितानि । येषां धनानि सकलार्थिजनाश्रितानि, तेषां कृते वहति कूर्मपतिर्धरित्रीम् ॥ १२ ॥ मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः । परगुणपरमाणून् पर्वतीकृत्य नित्यं, निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ १३ ॥ चेतः सार्द्रतरं वचः सुमधुरं दृष्टिः प्रसन्नोज्ज्वला, शक्तिः क्षान्तियुता मतिः श्रितनया श्रीर्दानदैन्यापहा । रूपं शीलयुतं श्रुतं गतमदं स्वामित्वमुत्सेकतानिर्मुक्तं प्रकटान्यहो नवसुधाकुण्डान्यमून्युत्तमे ॥ १४ ॥ अवगणइ[1] दोसलक्खं इक्कं मंनेइ जं कयं सुकयं । सयणो हंससहावो पिअइ पयं वज्जए नीरं ॥ १५ ॥ नाभ्युत्थानक्रमो यत्र, नालापा मधुराक्षराः । गुणदोषकथा नैव, तत्र हर्म्ये न गम्यते ॥ १६ ॥ गर्वं नोद्वहते न निन्दति परं नो भाषते निष्ठुरं, प्रोक्तः केनचिदप्रियाणि सहते क्रोधं न चालम्बते । श्रुत्वा काव्यमलक्षणं परकृतं संतिष्ठते मूकवद्दोषान् छादयते स्वयं न कुरुते ह्येतत्सतां चेष्टितम् ॥ १७ ॥ न ब्रूते परदूषणं परगुणं वक्त्यल्पमप्यन्वहं, संतोषं वहते परर्धिषु पराबाधासु धत्ते शुचम् । स्वश्लाघां न करोति नोज्झति नयं नौचित्यमुल्लङ्घयत्युक्तोऽप्यप्रियमक्षमां न रचयत्येतत्सतां लक्षणम् ॥ १८ ॥ नम्रत्वेनोन्नमन्तः परगुणनुतिभिः स्वान् गुणान् ख्यापयन्तः, पुष्णन्तः स्वीयमर्थं सततकृतमहारम्भयत्नाः परार्थे । क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान् दुर्मुखान् खर्वयन्तः, सन्तः साश्चर्यचर्यास्त्रिभुवनभवने वन्दनीया जयन्ति ॥ १९ ॥ ये जीवेषु दयालवः स्पृशति यान् स्वल्पोऽपि न श्रीमदः,

[1] अवगणयति दोषलक्षान् एकं मानयति यत्कृतं सुकृतम् । सज्जनो हंसस्वभावः, पिबति पयो वर्जयति नीरम् ॥ १५ ॥

श्रान्ता ये न परोपकारकरणे हृष्यन्ति ये याचिताः। स्वस्थाः सत्स्वपि यौवनोदयमहाव्याधिप्रकोपेषु ये, ते लोकोत्तर-
चिरपाळचरिताः श्रेष्ठाः कति स्युर्नराः ? ॥ २० ॥ उत्तिष्ठन्ति निजासनान्नतशिरः पृच्छन्ति च स्वागतं, संतुष्यन्ति
भजन्ति यान्ति च चिरं प्रेमोपमां संगतिम्। सिञ्चन्तो वचनामृतेन सततं सन्तः समीपागते, किं वा न प्रियमप्रियेऽपि
हि जने कुर्वन्ति जल्पन्ति च॥ २१॥ शूराः सन्ति सहस्रशः प्रतिपदं विद्याविदोऽनेकशः, सन्ति श्रीपतयो निरस्तधनद-
स्तेऽपि क्षितौ भूरिशः। किन्त्वाकर्ण्य निरीक्ष्य वाऽन्यमनुजं दुःखार्दितं यन्मनस्ताद्रूप्यं प्रतिपद्यते जगति ते सत्पौरुषाः
पञ्चषाः॥ २२॥ पातालान्न विमोचितो बत बलिर्नीतो न मृत्युः क्षयं, नोन्मृष्टं शशलाञ्छनस्य मलिनं नोन्मूलिता
व्याधयः। शेषस्यापि धरां विधृत्य न कृतो भारावतारः क्षणं, चेतः सत्पुरुषाभिधानपदवीं न त्वं वहँल्लज्जसे ? ॥ २३ ॥
दिग्वासाश्चन्द्रमौलिर्वहति रविरयं वाहवैपम्यकष्टं, राहुः सातङ्कमिन्दुं रचयति गरुडान्नागवर्गो बिभेति। रत्नानां धाम
सिन्धुस्त्रिदशगिरिपती स्वर्णमय्यापि तस्मात्किं दत्तं रक्षितं वा किमु ? किमिति जगत्यर्ज्यते ? येन गर्वः॥ २४॥ क्षारो
वारिनिधिः कलङ्ककलुषश्चन्द्रो रविस्तापकृत्, पर्जन्यश्चपलाश्रयः स्वयमुतादृश्यः सुवर्णाचलः। शून्यं व्योम सुधा द्वि-
जिह्वविधुरा स्वर्धामधेनुः पशुः, काष्ठं कल्पतरुर्दृषत्सुरमणिस्तत्केन साम्यं सताम् ? ॥ २५ ॥ संतगुणकित्तणेणवि पुरिसा
लज्जंति जे महासत्ता। इअरा अ अपसंसणेणावि हियए न मायंति ॥ २६ ॥

१ सद्गुणकीर्तनेनापि पुरुषा लज्जन्ते ये महासत्त्वाः। इतरे चात्मशंसनेनापि हृदये न मान्ति ॥ २६ ॥

## सज्जनसूक्तानि २७

यात्रार्थं भोजनं येषां, दानार्थं च धनार्जनम् । धर्मार्थं जीवितं येषां, ते नराः स्वर्गगामिनः ॥ १ ॥ विवेकः सह संपत्त्या, विनयो विद्यया सह । प्रभुत्वं प्रश्रयोपेतं, चिह्नमेतन्महात्मनाम् ॥ २ ॥ यौवनेऽपि प्रशान्ता ये, ये च हृष्यन्ति याचिताः । वर्णिता ये च लज्जन्ते, ते नरा जगदुत्तमाः ॥ ३ ॥ विभूतिरयशःस्पृष्टा, शिष्टाचारोज्झिता मतिः । चेष्टा साधुजनानिष्टा, भवत्यु (वेज्ञो) न्नतचेतसाम् ॥ ४ ॥ शैले शैले न माणिक्यं, मौक्तिकं न गजे गजे । साधवो न हि सर्वत्र, चन्दनं न वने वने ॥ ५ ॥ दधत्यार्त्तं सुखीकर्त्तुं, सन्तः सन्तापमात्मना । सुदुःसहं सहन्ते हि, तरवस्तपनातपम् ॥ ६ ॥ अवगणइ दोसलक्खं इक्कं मन्नेइ जं कयं सुकयं । सयणो हंससहावो पिअइ पयं वज्जए नीरं ॥ ७ ॥ रे कंटालि केवडी कांटे फाटि तु फाटि । एकुं तुह सिरि फूलडउं पूरइ गंध रहाडि ॥ ८ ॥ अपेक्षन्ते न च स्नेहं, न पात्रं न दशान्तरम् । सदा लोकहिता भक्ता, रत्नदीपा इवोत्तमाः ॥ ९ ॥ उपकर्त्तुं प्रियं वक्तुं, कर्त्तुं स्नेहमकृत्रिमम् । सज्जनानां स्वभावोऽयं, केनेन्दुः शिशिरीकृतः ? ॥ १० ॥ अयं निजः परो वेति, गणना लघुचेतसाम् । उदारचरितानां हि, वसुधैव कुटुम्बकम् ॥ ११ ॥ कुसुमान्यञ्जलिस्थानि, वासयन्ति करद्वयम् । प्रायः सुमनसां वृत्तिर्वामदक्षिणयोः समा ॥ १२ ॥ सतामपि महाद्वेषः, स्यादेकगुणजीविनाम् । वैमुख्यमेकमालायां, यथा सुमनसां मिथः ॥ १३ ॥ गर्जति शरदि न वर्षति वर्षति वर्षासु निःस्वनो

---

१ अवगणयति दोषलक्षं एकं मन्यते यत्कृतं सुकृतम् । सज्जनो हंसस्वभावः पिबति पयो वर्जयति नीरम् ॥ ७ ॥

करोत्येव ॥ १४ ॥ विपदि परेषां सन्तः समधिकतरमेव दधति सौज-
मेवः। नीचो वदति न कुरुते न वदति साधुः करोत्येव ॥ १४ ॥ विपदि परेषां सन्तः समधिकतरमेव दधति सौज-
न्यम्। ग्रीष्मे भवन्ति तरवो घनकोमलपल्लवच्छन्नाः ॥ १५ ॥ तुष्यन्ति भोजनैर्विप्रा, मयूरा घनगर्जितैः। साधवः पर-
सम्पत्त्या, खलाः परविपत्तिभिः ॥ १६ ॥ महतामुदये सन्तो दूरस्थितयोऽपि दधति परितोषम्। नभसि समुद्गत इन्दौ
मुदितं भुवि सिन्धुनाथेन ॥ १७ ॥ नालिकेरसमाकारा, दृश्यन्ते केऽपि सज्जनाः। अन्ये तु बदराकारा, बहिरेव मनो-
रमाः ॥ १८ ॥ सत्पक्षा ऋजवः शुद्धाः, सकला गुणसेविनः। तुल्यैरपि गुणैश्चित्रं, सन्तः सन्तः शराः शराः ॥ १९ ॥
गुणरश्मिमहाभारैर्नितान्तं पूरितान्तराः। सन्तो गौरवमायान्ति, यदि तत्र किमद्भुतम्? ॥ २० ॥ असंख्यैरपि नात्मीयैः,
स्वल्पैरपि परस्थितैः। गुणैः सन्तः प्रहृष्यन्ति, चित्रमेषां विचेष्टितम् ॥ २१ ॥ यथा यथा परां कोटिं, गुणः समधिरो-
हति। सन्तः कोदण्डधर्माणो, विनमन्ति तथा तथा ॥ २२ ॥ कोटिद्वयस्य लाभेऽपि, नतं सद्वंशजं धनुः। शरस्त्ववंशजः
स्तब्धो, लक्षास्तेरपि शङ्कया ॥ २३ ॥ नमन्ति फलिता वृक्षा, नमन्ति विबुधा जनाः। शुष्ककाष्ठं च मूर्खाश्च, भज्यन्ते न
नमन्ति च ॥ २४ ॥ जो गुणवंतउ सो नमइ निग्गुणु घट्ठओ थाइ। अवसि नमंतां गुण चडइ धणुह कहंतउं जाइ ॥२५॥
वराकः स कथं नाम, नम्रीभवतु दुर्जनः। आपादमस्तकं यस्य, स्थिता चान्तः कुशीलता ॥ २६ ॥ शुद्धवंशज कोदण्ड!,
सरलस्त्वमभूः पुरा। इदानीं गुणसंयोगात्केयं तव तु वक्रता ॥ २७ ॥ निर्गुणमप्यरनुरक्तं प्रायो न समाश्रितं जहति
सन्तः। स हि वृद्धिक्षयभाजं वहति शशाङ्कः कलङ्कमपि ॥ २८ ॥ दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि, मित्रावसा-
नसमये विहितोदयोऽपि। चन्द्रस्तथापि हरवल्लभतां प्रयाति, कुर्वन्ति नैव सुजनाः श्रितदोषचिन्ताम् ॥ २९ ॥

## सत्प्रकृतिसूक्तानि २८

स्वस्त्यस्तु सज्जनेभ्यो येषां हृदयानि दर्पणनिभानि । दुर्वचनभस्मसङ्गादधिकतरं यान्ति निर्मलताम् ॥ १ ॥ संतापितोऽपि साधुः शुभस्वभावं विशेषतो भजति । क्वथितं किं न क्षीरं मधुररसमनोहरं भवति ? ॥ २ ॥ सुजनो न याति विकृतिं परहितनिरतो विनाशकालेऽपि । छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥ ३ ॥ दुर्जनजनसंतप्तो यः साधुः साधुरेव स विशेषात् । अपि पावकसंतप्तः खण्डः स्याच्छार्करो मधुरः ॥ ४ ॥ व्रजति विरसत्वमितरः सत्यं परिमिलितसुन्दराः सन्तः । यान्ति तिलाः खलभावं स्निग्धः पयसो विकारोऽपि ॥ ५ ॥ अतिकुपिता अपि सुजना योगेन मृदूभवन्ति न तु नीचाः । हेम्नः कठिनस्यापि द्रवणोपायोऽस्ति न तृणानाम् ॥ ६ ॥ उपकर्त्ता स्वतः कश्चिदपकर्त्ता च कश्चन । चैत्रस्तरुषु पत्राणि, कर्त्ता हर्त्ता च फाल्गुनः ॥ ७ ॥ कलाकलापसंपन्ना, जल्पन्ति समये परम् । घनागमविपर्यासे, केकायन्ते न केकिनः ॥ ८ ॥ हिताय नाहिताय स्यात्, महान् सन्तापितोऽपि हि । पश्य रोगापहाराय, भवेदुष्णीकृतं पयः ॥ ९ ॥ न मुखेनोद्गिरत्यूर्द्ध्वं, हृदयान्न नयत्यधः । जरयत्यन्तरा साधुर्दोषं विषमिवेश्वरः ॥ १० ॥ दुर्जनवचनाङ्गारैर्दग्धोऽपि न विप्रियं वदत्यार्यः । न हि दह्यमानोऽप्यगुरुः, स्वभावगन्धं परित्यजति ॥ ११ ॥ पिशुनजनदूषिता अपि ननु सन्तः सत्यमेव सद्वाचः । अपि वर्बरचरणहतः खर्जूरो मिष्ट एव स्यात् ॥ १२ ॥ सहते कटुं न जल्पति लाति न दोषान् गुणान् प्रकाशयति । रुष्यति न रोषवत्स्वपि दाक्षिण्यमहोदधिः सुजनः ॥ १३ ॥ निवसन्नपि सममितरैरभिजातः शिक्षते न दुर्वचनम् । ध्वाङ्क्षविरावी न पिकः स्थितवानपि बलिभुजां भवने ॥ १४ ॥ आक्रोशि-

गोऽपि सुजनो न वदत्यवाच्यं, निष्पीडितोऽपि रसमुद्गिरते यथेक्षुः । नीचो जनो गुणशतैरपि सेव्यमानो, हास्येन तद्ध- दति परकलङ्केऽप्यवाच्यम् ॥ १५ ॥ उदीरयन्ति दुर्वाक्यं, स्वच्छाः स्वोत्पातसंभवे । उद्गिरन्ति मलं नेत्राण्यात्मपीडास- नागमे ॥ १६ ॥ दढरोसकलुसिअस्स वि सुअणस्स मुहस्स विप्पिअं कुत्तो । राहुमुहम्मि वि ससिणो किरणा अमिअं चि- अ मुअंति ॥ १७ ॥

## गुणदोषोक्तिसूक्तानि २९

गुणदोषसमाहारे, गुणान् गृह्णन्ति साधवः । क्षीरनीरसमाहारे, हंसाः क्षीरमिवामलम् ॥ १ ॥ स्वगुणं परदोषं वा, वक्तुं याचयितुं परम् । अर्थिनं च निराकर्तुं, सतां जिह्वा जडायते ॥ २ ॥ स्वश्लाघा परनिन्दा च, मत्सरो महतां गुणे । असंबद्धप्रलापित्वमात्मानं पातयत्यधः ॥ ३ ॥ दूषणं मतिरुपैति नोत्तमी, माध्यमी स्पृशति भाषते न च । वीक्ष्य पार्श्वमथ भाषतेऽधमो, रारटीति सहसाऽधमाधमः ॥ ४ ॥ संतेहिं असंतेहिं अ परस्स किं जंपिएहिं दोसेहिं । अच्छो जसो न लब्भइ सोवि अमित्तो कओ होइ ? ॥ ५ ॥ सन्तोऽप्यसन्तोऽपि परस्य दोषा, नोक्ताः श्रुता वा गुणमावहन्ति । वैराणि वक्तुः परिवर्द्धयन्ति, श्रोतुश्च तन्वन्ति परां कुबुद्धिम् ॥ ६ ॥ असंख्याः परदोषज्ञा, गुणज्ञा अपि केचन । स्वयमेव स्वदोषज्ञा, विद्यन्ते यदि पञ्चषाः ॥ ७ ॥ सर्वस्यात्मा गुणवान् सर्वः परदोषदर्शने कुशलः । सर्वस्य चास्ति वाच्यं न चात्मदोषान् वदति कश्चित् ॥ ८ ॥ परवादे दशवदनः परदोषनिरीक्षणे सहस्राक्षः । सद्वृत्तवित्तहरणे बाहुसहस्रार्जुनो नीचः ॥ ९ ॥ परदोषकथाविचक्षणः स्वगुणख्यापननित्यतत्परः । स्वयमेव हि दैवदण्डितः कुलशीले कथयत्यपण्डितः ॥ १० ॥ प्रच्छा-

दयति दुरात्मा सुजनः प्रकटयति परगुणान् काले । तिरयति भुवनानि तमस्तान्येव रविः प्रकाशयति ॥ ११ ॥ निधानीभूतमात्सर्यमन्तर्नीचस्य तिष्ठति । परश्लाघासु येनास्य, दृश्यते मुद्रितं मुखम् ॥ १२ ॥ सीसं धुणिअं चित्तं चमक्किअं पुलइअं च अंगेहिं । तहवि हु खलस्स वाणी, परगुणगहणे न नीसरिआ ॥ १३ ॥ वयणपरंपरतंदुलपरतत्तीगोरसेण रद्धाओ । अप्पुव्वो कोइ रसो एआए गलरब्बाए ॥ १४॥ सत्त य सायर परिभमिअ, सयलं महिअलु दिट्ठु । ताति पराई जु न करइ, सो मई कहवि न दिट्ठु ॥ १५ ॥ लोअ पराया कच्चडा करइं जि संत असंत । दोस न पिच्छइ अप्पणा, जाह न छेहु न अंत ॥ १६ ॥ राईसरिसवमित्ताणि परछिद्दाणि गवेसए । अप्पणो विल्लमित्ताणि पासंतोवि न पासइ ॥ १७ ॥ अङ्गनानामिवाङ्गानि, गोप्यन्ते स्वगुणा यदा । तदा ते स्पृहणीयाः स्युस्तदा चात्यन्तनिर्मलाः ॥ १८ ॥ सतोऽप्यसतो वापि, स्वयं स्वान् वर्णयन् गुणान् । ब्रह्मापि हास्यतां याति, किं पुनः प्राकृतो जनः ? ॥ १९ ॥ परेण परिविख्यातो, निर्गुणोऽपि गुणीभवेत् । शक्रोऽपि लघुतां याति, स्वयं प्रख्यापितैर्गुणैः ॥ २० ॥ अपि देवा यन्न विदुस्तदपि हि पृच्छंति हेलया लोकाः । स्खलिते हसन्ति मूढा मिलिते च न विस्मयः कोऽपि ॥ २१ ॥

## खलस्वरूपसूक्तानि ३०

स्थाप्यते महतां पङ्क्तौ, क्वचिन्नीचोऽपि कार्यतः । स्थैर्याय स्थाप्यतेऽङ्गारः, कर्पूरे समकक्षया ॥ १ ॥ प्रशस्यः खल एवैको, यद्भयादखिलो जनः । अनार्यकार्यमुत्सार्य, वर्त्तते न्यायवर्त्मनि ॥ २ ॥ विशिष्टकुलजातोऽपि, यः खलः खल एव सः । चन्दनादपि संभूतो, दहत्येव हुताशनः ॥ ३ ॥ वयसः परिणामेऽपि, यः खलः खल एव सः । सुपक्वमपि

माधुर्यं, नोपयातींद्रवारणम् ॥ ४ ॥ खलः सत्क्रियमाणोऽपि, ददाति कलहं सताम् । दुग्धधौतोऽपि किं याति, वायसः
कलहंसताम् ? ॥ ५ ॥ उपकृतिरेव खलानां दोषस्य महीयसो भवति हेतुः । अनुकूलाचरणेन हि कुप्यन्ति व्याधयो-
ऽत्यर्थम् ॥ ६ ॥ सद्भिः संसेव्यमानोऽपि, शान्तवाक्यैर्जलैरिव । दुष्टपाषाणवदुष्टस्तापमेवाभिमुञ्चति ॥ ७ ॥ अल्पमपि
गुणाय गुणिनां महदपि दोषाय दोषिणां सुकृतम् । तृणमपि दुग्धाय गवां दुग्धमपि विषाय सर्पाणाम् ॥ ८ ॥ उप-
कारिण्यपि सुजने स्निग्धेऽपि खलास्त्यजन्ति न प्रकृतिम् । ज्वलति जलैरपि सिन्धोरङ्के निहितोऽपि वडवाग्निः ॥ ९ ॥
अशनमात्रकृतज्ञतया गुरोर्न पिशुनोऽपि शुनो लभते तुलाम् । अपि बहूपकृते सखिता खले, न खलु खेलति खे लतिका
यथा ॥ १० ॥ स्नेहेन भूतिदानेन, कृतः स्वच्छोऽपि दुर्जनः । दर्पणश्चान्तिके तिष्ठन्, करोत्येकमपि द्विधा ॥ ११ ॥
मक्षिकाः क्षतमिच्छन्ति, क्षतमिच्छन्ति पार्थिवाः । दुर्जनाः क्षतमिच्छन्ति, शान्तिमिच्छन्ति सज्जनाः ॥ १२ ॥ दुष्टः
प्रविष्टमात्रोऽपि, विपाटयति शिष्टहृत् । सौवीरेऽन्तर्गते क्षीरं, विशीर्येत सहस्रधा ॥ १३ ॥ ऋजुरेष पक्षवानिति काण्डे
प्रीतिं खले च मा कार्षीः । प्रायेण हि त्यक्तगुणः फलेन हृदयं विदारयति ॥ १४ ॥ क्वचिदुष्णः क्वचिच्छीतः, क्वचित्सा-
धारणो मतः । नैकरूपः खलजनः, संनिपात इव ज्वरः ॥ १५ ॥ सर्पाणां च खलानां च, चौराणां च विशेषतः । अभि-
प्राया न सिद्ध्यन्ति, तेनेदं वर्त्तते जगत् ॥ १६ ॥ अतियत्नगृहीतोऽपि, खलः खलखलायते । शिरसा धार्यमाणोऽपि,
तोयस्यार्धघटो यथा ॥ १७ ॥ भग्गं न जायइ घडणं दुज्जणहिययं कुलालभंडं व । सयखंडोवि घडिज्जइ कंचणकलसो
सुअणचित्तं ॥ १८ ॥ दुज्जणजणु वन्धुलवणु जइ सिंचह अमिएण । तो अति कंटावि घणा सारीर हह गुणेण ॥ १९ ॥

न प्रेम नौषधं नाज्ञा, न सेवा न गुणो न धीः। न कुलं न बलं नाशीर्दुर्जनस्य प्रसत्तये ॥ २० ॥ पोतो दुस्तरवारिराशितरणे दीपोऽन्धकारागमे, निर्वाते व्यजनं मदान्धकरिणां दर्पोपशान्त्यै शृणिः। इत्थं तद्भुवि नास्ति यत्र विधिना नोपायचिन्ता कृता, मन्ये दुर्जनचित्तवित्तहरणे धाताऽपि भग्नोद्यमः ॥ २१ ॥

## खलप्रकृतिसूक्तानि ३१

अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च । स्तोकेनोन्नतिमायाति, स्तोकेनायात्यधोगतिम् ॥ १ ॥ खलानां कण्टकानां च, द्विविधैव प्रतिक्रिया । उपानद् मुखभङ्गो वा, दूरतो वा विसर्जनम् ॥ २ ॥ दुर्जनः परिहर्त्तव्यो, विद्ययाऽलङ्कृतोऽपि सन् । मणिना भूषितः सर्पः, किमसौ न भयङ्करः? ॥ ३ ॥ मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् । लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ ४ ॥ दह्यमानाः सुतीव्रेण, नीचाः परयशोऽग्निना । अशक्तास्तत्पदं गन्तुं, ततो निन्दां प्रचक्रिरे ॥ ५ ॥ उज्ज्वलगुणमभ्युदितं क्षुद्रो द्रष्टुं न कथमपि क्षमते । हित्वा तनुमपि शलभः शुभ्रं दीपार्चिरपहरति ॥ ६ ॥ धुत्ता हुंति सुवच्छला, असई होइ निलज्जु । खारापाणि सीअलां, वहुफल फुलइ अभक्ख ॥ ७ ॥ भोलो कज्जगाही कारणकुसलो अ मुक्कलाहत्थो । धुत्तो छायग्गिहो होइ गुरुदेवाण य भत्तो ॥ ८ ॥ का खलेन सह स्पर्धा? सज्जनस्याभिमानिनः । भाषणं भीषणं साधुदूषणं यस्य भूषणम् ॥ ९ ॥ यद्यदिष्टतमं तत्तद्देयं गुणवते किल । अत एव खलो दोषान्, साधुभ्यः संप्रयच्छति ॥ १० ॥ समर्पिताः कस्य न तेन दोषा, हठाद्गुणा वा न हृताः खलेन । तथापि दोषैर्न वियुज्यतेऽसौ, स्पृष्टोऽपि नैकेन गुणेन चित्रम् ॥ ११ ॥ न सूरिः सुराणां गुरुर्नासुराणां, पुराणां रिपु-

॥१२॥ उपकृतं बहु यत्र किमुच्यते,
नाभि नाभि स्वयम्भूः। खला एव विशाश्चरित्रे खलानां, भुजङ्गमयातं भुजङ्गा विदन्ति ॥१३॥ न विना परवा-
गुन्नता प्रथिता भवता चिरम्। विदधदीदृशमेव सदा सखे, सुखितमास्व ततः शरदां शतम् ॥ १३ ॥ न विना परवा-
देन, हृष्टो भवति दुर्जनः। काकः सर्वरसान् पीत्वा, विनाऽमेध्यं न तृप्यति ॥ १४ ॥ शाठ्यं ह्रीमति वर्ण्यते व्रतरुचौ
दम्भः शुचौ कैतवं, शूरे निर्घृणता ऋजौ विमतिता दैन्यं प्रियालापिनि। तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः
स्थिरे, तत्को नाम गुणो भवेदिह सतां यो दुर्जनैर्नाङ्कितः? ॥ १५॥ दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वासः।
बालः पयसा दग्धो दध्यपि फूत्कृत्य भक्षयति ॥ १६ ॥ विकारमुपकारोऽपि, कुरुते समयं विना। अकालोपस्थिता
वृष्टिर्गोहारिणाय जायते ॥ १७ ॥ दुर्जनः कालकूटं च, ज्ञातमेतौ सहोदरौ। अग्रजन्मानुजन्मा च, न विद्मः कतरो-
ऽनयोः ॥ १८ ॥ फणाँ भोगभृतां मूर्ध्नि, साधु नाधत्त यद्विधिः। सकर्णः कोऽनुकुर्वीत, मर्माविस्कर्म तादृशम्? ॥ १९ ॥
नौश्च दुर्जनजिह्वा च, प्रतिकूलविसर्पिणी। जनप्रतारणायैव, दारुणा केन निर्मिता? ॥ २० ॥ नव्याऽऽश्रयस्थितिरियं तव
कालकूट!, केनोत्तरोत्तरविशेषपदप्रतिष्ठा। प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ, कण्ठे पुनर्वससि वाचि ततः खलानाम् ॥
॥ २१ ॥ वृश्चिकानां भुजङ्गानां, दुर्जनानां च वेधसा। विभज्य नियतं न्यस्तं, विषं पुच्छे मुखे हृदि ॥ २२॥ निर्माय खल-
जिह्वाग्रं, सर्वप्राणहरं नृणाम्। चकार किं वृथा शास्त्रविषवह्नीन् प्रजापतिः ॥ २३ ॥ अहो खलभुजङ्गस्य, कोऽप्यपूर्वो
वधक्रमः। अन्यस्य लगति श्रोत्रे, प्राणैरन्यो विमुच्यते ॥ २४ ॥ अहो राहुः कथं क्रूरश्चन्द्रं गिलति मुञ्चति?। गिलन्ति
न हि मुञ्चन्ति, दुर्जनाः सज्जनप्रजम् ॥ २५ ॥ आजन्मसिद्धं कौटिल्यं, हलस्य च खलस्य च। सोढुं ययोर्मुखाक्षेपमलमे-

कैव सा क्षमा ॥ २६ ॥ आखुभ्यः किं खलैर्ज्ञातं ?, खलेभ्यः किमथाऽऽखुभिः ? । येषां परगृहोत्खातादन्यत्कर्म न विद्यते ॥ २७ ॥ अकलितपरस्वरूपः स्वकमपि दोषं परस्थितं वेत्ति । नाविस्थितस्तटस्थानचलानपि विचलतो मनुते ॥ २८ ॥ जिह्वैकैव सतामुभे फणभृतां स्रष्टुश्चतस्रो मतास्ताः सप्तैव विभावसोर्नियमिताः षट् कार्तिकेयस्य च । पौलस्त्यस्य दशैव ताः फणिपतेर्जिह्वासहस्रद्वयं, जिह्वालक्षसहस्रकोटिनियमो नो दुर्जनानां मुखे ॥ २९ ॥ दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोद्घाटितार्धासनो, गाढालिङ्गनतत्परः प्रियकथालापेषु बद्धादरः । अन्तर्गूढविषो बहिर्मधुमयश्चातीवमायापटुः, को ? नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनः ॥ ३० ॥ मुखेऽतिमिष्टादवसानदुष्टात्, खलादपथ्यादिव शङ्कनीयम् । आनन्दनीयं प्रथमं सुतीक्ष्णादन्तेऽनुकूलादगदादिवाऽऽर्यात् ॥ ३१ ॥ दुर्जनैरुच्यमानानि, वचांसि मधुराण्यपि । अकालकुसुमानीव, संत्रासं जनयत्यलम् ॥ ३२ ॥ वने प्रज्वलितो वह्निर्दहन् मूलानि रक्षति । समूलमुन्मूलयति, जलौघो मृदुशीतलः ॥ ३३ ॥ चारुता परदारार्थे, धनं लोकोपतप्तये । प्रभुत्वं साधुनाशाय, खले खलतरा गुणाः ॥ ३४ ॥ विद्या विवादाय धनं मदाय, प्रज्ञाप्रकर्षः परवञ्चनाय । अत्युन्नतिर्लोकपराभवाय, सतामहो सर्वमिदं गुणाय ॥ ३५ ॥

## नीचसंबन्धिसूक्तानि ३२

अन्यसादपि लब्धोष्मा नीचः प्रायेण दुस्सहो भवति । न तपति रविरिह तादृग् यादृगयं वालुकानिकरः ॥ १ ॥ प्राकृत एव प्रायो मृदुषु तरां दीप्यते न सत्पुरुषाः । वारिणि तैलं विकसति निर्मुक्तं स्त्यायते सर्पिः ॥ २ ॥ विघटयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम् । पातयितुमेव शक्तिर्नाखोरुद्धर्त्तुमुत्रिपिटिम् ॥ ३ ॥ धूमः पयोधरपदं

खलप्रकृतिद्वारं ३१ श्लो. ३५
नीचसंबंधिद्वारं ३२ श्लो. १०

कथमप्यवाप्य, वर्षाम्बुभिः शमयति ज्वलनस्य तेजः। दैवादवाप्य ननु नीचजनः प्रतिष्ठां, प्रायः स्वबन्धुजनमेव तिर-
स्करोति ॥ ४ ॥ यथा गजपतिः श्रान्तश्छायार्थी वृक्षमाश्रितः। विश्रम्य तं द्रुमं हन्ति, तथा नीचः स्वमाश्रयम् ॥ ५ ॥
न टिट्टिभो गच्छति हंसलीलया, न वायसः कूजति कोकिलस्वनम्। यवाः प्रकीर्णा न भवन्ति शालयस्तथैव नीचः
प्रकृतिं न मुञ्चति ॥ ६ ॥ रे पक्षिन्नागतस्त्वं कुत इह सरसस्तत्कियद्भो विशालं? किं मद्धाम्नोऽपि? बाढं तदिह शठ
महापाप! मा ब्रूहि मिथ्या। इत्थं कूपोदरस्थः शपति तटगतं दर्दुरो राजहंसं, नीचः स्वल्पेन गर्वीभवति हि विषया
नापरे ये न दृष्टाः ॥ ७ ॥ नाहं काको महाराज!, हंसोऽहं विमले जले। नीचसङ्गप्रबन्धेन, मृत्युरेव न संशयः ॥ ८ ॥
अज्ञातकुलशीलस्य, न दातव्यः प्रति श्रयः। मत्कुणस्य च दोषेण, हता मन्दविसर्पिणी ॥ ९ ॥ लूणह घुणह कुमाणुसह,
एह तिहुं इकु सहावु। जहीं करइ आवासउ, तहिं तहिं भंजइ ठाउ ॥ १० ॥

## उपकारसूक्तानि ३३

शास्त्रं बोधाय दानाय, धनं धर्माय जीवितम्। वपुः परोपकाराय, धारयन्ति मनीषिणः ॥ १ ॥ कियती पञ्चसहस्री? कियती लक्षाऽथ कोटिरपि कियती?। औदार्योन्नतमनसां रत्नवती वसुमती कियती? ॥ २ ॥ क्षेत्रं रक्षति चञ्चा सौधं लोलत्पदी कणान् रक्षा। दन्तात्तृणं प्राणान् नरेण किं निरुपकारेण? ॥ ३ ॥ अस्ति जलं जलराशौ तत्किं क्षारं

---

[1] यूका।

विधीयते तेन ?। लघुरपि वरं स कूपो यत्राऽऽकण्ठं जनः पिवति ॥ ४ ॥ हे हेलाजितवोधिसत्त्व! वचसां किं विस्तरै-स्तोयधे!, नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः । तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशोभारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः॥ ५ ॥ वरं करीरो मरुमार्गवर्त्ती, यः पान्थसार्थं कुरुते कृतार्थम् । कल्पद्रुमैः किं कनकाचलस्थैः?, परोपकारप्रतिलम्भदुःस्थैः ॥ ६ ॥ अर्काः किं फलसंचयेन भवतां किं वः प्रसूनैर्नवैः, किं वा भूरिलताचयेन महता गोत्रेण किं भूयसा?। येषामेकतमो वभूव स पुनर्नैवास्ति कश्चित्कुले, छायायामुपविश्य यस्य पथिकास्तृप्तिं फलैः कुर्वते ॥ ७ ॥ जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं, श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम्। संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न चाधो, ब्रह्माण्डोन्दुम्वरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥८॥ विद्वांसः कति योगिनः कति गुणैर्वैदग्ध्यभाजः कति, प्रौढा मत्तकरीन्द्रकुम्भदलने वीराः प्रसिद्धाः कति । स्वाचाराः कति सुन्दराः कति कति प्राज्यप्रतिष्ठा वराः, किं त्वेको विरलः परोपकरणे यस्यास्ति शक्तिः सदा ॥ ९ ॥ ते तावत्कृतिनः परार्थघटकाः स्वार्थाविरोधेन ये, ये च स्वार्थपरार्थसाधनपरास्तेऽमी नरा मध्यमाः । तेऽमी मानुषराक्षसाः परहितं यैः स्वार्थतो हन्यते, ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ?॥ १० ॥ किमत्र चित्रं यत्सन्तः, परानुग्रहकारिणः?। न हि स्वदेहशान्त्यर्थं, जायन्ते चन्दनद्रुमाः ॥ ११ ॥ यद्यपि चन्दनविटपी विधिना फलकुसुमवर्जितो विहितः। निजवपुषैव परेषां तथापि संतापमपहरति ॥ १२ ॥ न चन्द्रमाः प्रत्युपकारलिप्सया, करोति भाभिः कुमुदाववोधनम् । स्वभाव एवोन्नतचेतसामयं, परोपकारव्यसनं हि जीवितम् ॥ १३ ॥ किं चन्द्रेण महोदधेरुपकृतं दूरेऽपि संतिष्ठता

तृप्तो येन विगर्दते प्रजति च क्षीणे क्षयं सागरः । अः ज्ञातं परकार्यनिश्चितधियां कोऽपि स्वभावः सतां, स्वैरङ्गैरपि,
येन यान्ति तनुतां दृष्ट्वा परं दुःखितम् ॥ १४ ॥ यदमी दशन्ति दशना रसना तत्स्वादसुखमवाप्नोति । प्रकृतिरियं
धवलानां क्लिश्यन्ति यदन्यकार्येषु ॥ १५ ॥ लङ्घयति भुवनमुदधेर्मध्यं प्रविशति वहति जलभारम् । जीमूतः सत्त्वहिताः
किं न कुर्वन्ति धान्यार्थे ॥ १६ ॥ यः परप्रीतिमाधातुं, भस्मतामपि गच्छति । विवेकिमानिना पश्य, धात्रा सोऽप्यगुरुः
कृतः ॥ १७ ॥ पिबन्ति नद्यः स्वयमेव नाम्भः, स्वादन्ति न स्वादुफलानि वृक्षाः । पयोमुचां किं क्वचिदस्ति शस्यं ?,
परोपकाराय सतां विभूतिः ॥ १८ ॥ धवलयति समग्रं चन्द्रमा जीवलोकं, किमिति निजकलङ्कं नात्मसंस्थं प्रमार्ष्टि ।
भुवनविदितमेतत्प्रायशः सज्जनानां, परहितनिरतानामादरो नात्मकार्ये ॥ १९ ॥ कस्यादेशात्क्षपयति तमः सप्तसप्तिः
प्रजानां, छायां कर्तुं पथि विटपिनामञ्जलिः केन बद्धः ।? अभ्यर्थ्यन्ते नवजलमुचः केन वा वृष्टिहेतोर्जात्यैवैते परहित-
विधौ साधवो बद्धकक्षाः ॥ २० ॥ परोपकारः सुकृतैकमूलं, परोपकारः कमलादुकूलं । परोपकारः प्रभुताविधाता, परो-
पकारः शिवसौख्यदाता ॥ २१ ॥ रवेरेवोदयः शस्यः, कोऽन्येषामुदये ग्रहः ?। न तमांसि न तेजांसि, येषामभ्युदये सति
॥ २२ ॥ गुरुकोऽसि भुवनभारे मा वक्रां कन्धरां कृथाः शेष ! । त्वय्येकस्मिन् दुःखिनि सुखितानि भवन्ति भुवनानि
॥ २३ ॥ धन्धनस्थोऽपि मातङ्गः, परेषां भरणक्षमः । काकः स्वच्छन्दचारोऽपि, स्वोदरेणापि दुःस्थितः ॥ २४ ॥ इदम-
न्तरमुपकृतये प्रकृतिचला यावदस्ति संपदियम् । विपदि नियतोदयायां पुनरुपकर्तुं कुतोऽवसरः ? ॥ २५ ॥ अपकारि-
ष्वपि प्रायः, स्वच्छाः स्युरुपकारिणः । मारकेभ्योऽपि कल्याणं, रसराजः प्रयच्छति ॥ २६ ॥ बाधाविधायिनामपि

विदधत्युपकारममलात्मानः (मिह सन्तः)। बद्धमपि किं न जनयति सौरभ्यं केतकीकुसुमम्? ॥ २७ ॥ उपकारः कृतोऽल्पोऽपि, सतां याति न विस्मृतिम्। करम्बभोजनं वध्वाः, कुमारनृपतेरिव ॥ २८ ॥ परोपकारः क्रियते, स्वस्य कल्याणहेतवे। ततोऽपि यद्यकल्याणं, कल्याणात्तत्परं पदम् ॥ २९ ॥ उपकृत्युपकुर्वाणा, ध्रियन्ते धरया न के?। अपकृत्युपकारी यस्तेनेयं ध्रियते धरा ॥ ३० ॥ प्रत्युपकुर्वन् बह्वपि न भवति पूर्वोपकारिणां तुल्यः। एकोऽनुकरोति कृतं निष्कारणमेव कुरुतेऽन्यः ॥ ३१ ॥ गुरुआ सहजिं गुण करइं, कारण किंपि म जाणि। करिसण सिंचइ सर भरइं, मेह किं मग्गइं दाणि? ॥ ३२ ॥ दो पुरिसे धरओ धरा अहवा दोहिंपि धारिआ पुहवी। उवयारे जस्स मई उवयरिअं जे न फुसंति ॥ ३३ ॥ विहलं जो अवलंबइ आपइपडिअं च जो समुद्धरइ। सरणागयं च रक्खइ तिसु तेसु अलंकिआ पुहवी ॥ ३४ ॥ न तं पश्यामि अकृतज्ञा असंख्याताः, संख्याताः कृतवेदिनः। कृतोपकारिणः स्तोकाः, द्वित्राः स्वेनोपकारिणः ॥ ३५ ॥ न तं पश्यामि सौमित्रे!, कृते प्रतिकरोति यः। सर्वस्यापि कृतार्थस्य, मतिरन्या प्रवर्त्तते ॥ ३६ ॥ न हि मे पर्वता भारा, न मे भाराश्च सागराः। कृतघ्नाश्च महाभारा, भारा विश्वासघातकाः ॥ ३७ ॥



## मैत्रीसंबन्धिसूक्तानि ३४

ईश्वरेण समं प्रीतिर्न मे लक्ष्मण! रोचते। गतस्य गौरवं नास्ति, आगते च धनक्षयः ॥ १ ॥ सहजागराण सहसुअणाणं सहहरिससोअवंताणं। नयणाणं व धन्नाणं, आजम्मं निच्चलं पिम्मं ॥ २ ॥ एक गदु सउ वारिआं वारी वारी



१ सह जागरतोः सह स्वपतोः सह हर्षशोकवतोः। नयनयोरिव धन्यानामाजन्म निश्चलं प्रेम ॥ २ ॥

मित्त । केही सेरी सांचरउं कहि नउं राखउं चित्त ॥ ३ ॥ रत्तउ दिणयरु उग्गमइ, रत्तउं दाडिम फूलु ! रत्तउं रत्ता
जइ मिळइ, कवण करेसिइ मूलु ? ॥ ४ ॥ परोक्षे कार्यहंतारं, प्रत्यक्षे प्रियवादिनम् । वर्जयेत्तादृशं मित्रं, विषकुम्भं पयो-
मुखम् ॥ ५ ॥ किं गुणैस्तस्य कर्त्तव्यं ?, चेतसो योऽभिरोचते । किं गुणैस्तस्य कर्त्तव्यं, चेतसो यो न रोचते ? ॥ ६ ॥
कृतज्ञस्वामिसंसर्गमुत्तमस्त्रीपरिग्रहम् । कुर्वन्मित्रमलोभं च, नरो नैवावसीदति ॥ ७ ॥ उत्तमैः सह साङ्गत्यं, पण्डितैः
सह सत्कथाः । अलुब्धैः सह मित्रत्वं, कुर्वाणो नावसीदति ॥ ८ ॥ ददाति प्रतिगृह्णाति, गुह्यमाख्याति पृच्छति । भुङ्क्ते
भोजयति चैवं, षड्विधं प्रीतिलक्षणम् ॥ ९ ॥ पापान्निवारयति योजयते हिताय, गुह्यं निगूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले, सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ १० ॥ क्षीरेणात्मगतोदकाय हि गुणा दत्ताः
पुरा तेऽखिलाः, क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः । गन्तुं पावकमुन्मनस्तदभवद् दृष्ट्वा तु मित्रापदं,
युक्तं तेन जलेन शाम्यति सतां मैत्री भवेदीदृशी ॥ ११ ॥ आदिमध्यनिधनेषु सौहृदं, सज्जने भवति नेतरे जने । छिन्न-
ताडितसुघृष्टतापितं, नान्यभावमुपयाति काञ्चनम् ॥ १२ ॥ शरावनौनदीवृक्षसमा प्रीतिः प्रशस्यते । प्रासादवेणिदण्डे-
क्षुसमा प्रीतिर्न युज्यते ॥ १३ ॥ आरम्भगुर्वी क्षयिणी क्रमेण, लघ्वी पुरा वृद्धिमती च पश्चात् । दिनस्य पूर्वार्द्धपरार्द्ध-
भिन्ना, छायेव मैत्री खलसज्जनानाम् ॥ १४ ॥ अस्माभिश्चतुरम्बुराशिरसनाविच्छेदिनीं मेदिनीं, भ्राम्यद्भिर्न स कोऽपि
निस्तुषगुणो दृष्टो विशिष्टो जनः । यस्याग्रे चिरसंचितानि हृदये दुःखानि सौख्यानि च, व्याख्याय क्षणमेकमर्द्धमथवा
निःश्वस्य विश्रम्यते ॥ १५ ॥ वारंवारमियं चिन्ता, वारंवारमियं कथा । युष्माकं दर्शनोत्कण्ठा, चक्षुषोः केन पूर्यते ?

॥ १६ ॥ मृगा मृगैः सङ्गमनुव्रजन्ति, गावश्च गोभिस्तुरगास्तुरङ्गैः । मूर्खाश्च मूर्खैः सुधियः सुधीभिः, समानशीलव्यसनेषु सख्यम् ॥१७॥ प्रकटयति हृदयदाहं पुरुषः प्रायेण सज्जने मिलिते । ग्रावा दग्धः सलिले पतिते पुनरुद्गमत्यग्निम् ॥ १८ ॥ स्वामिनि सौहृदयुक्ते निवेद्य दुःखं सुखीभवति ॥ १९ ॥ व्याधित-सुहृदि निरन्तरचित्ते गुणवति भृत्ये प्रियासु नारीषु । स्वार्थहीनस्य, देशान्तरगतस्य च । नरस्य शोकदग्धस्य, सुहृद्दर्शनमौषधम् ॥ २० ॥ अमृतं शिशिरे वह्निरमृतं क्षीरभो-जनम् । अमृतं राजसन्मानममृतं प्रियदर्शनम् ॥ २१ ॥ अदृष्टे दर्शनोत्कण्ठा, दृष्टे विरहभीरुता । नादृष्टेन न दृष्टेन, भवता लभ्यते सुखम् ॥ २२ ॥ ययोरान्तरजा प्रीतिस्तयोर्दूरस्थयोरपि । सा न मन्दायते क्वापि, रविराजीवयोरिव ॥२३॥ दूरस्थोऽपि न दूरस्थो, यो वै मनसि वर्त्तते । हृदयादथ निष्क्रान्तः, समीपस्थोऽपि दूरगः ॥ २४ ॥ क्व सरसि वनखण्डं पङ्कजानां क्व सूर्यः, क्व च कुमुदवनानां कौमुदीवन्धुरेषः । चिरपरिचयवद्धा प्रायशः सज्जनानां, न हि विचलति मैत्री दूरतोऽपि स्थितानाम् ॥२५॥ अत एव हि नेच्छन्ति, साधवः सत्समागमम् । यद्वियोगासिलूनस्य, मनसो नास्ति भेषजम् ॥ २६ ॥ वरमसौ दिवसो न पुनर्निशा, ननु निशैव वरं न पुनर्दिनम् । उभयमप्यथवा व्रजतु क्षयं, प्रियतमेन न यत्र समागमः ॥ २७ ॥ नित्यं ब्रह्म यथा स्मरन्ति मुनयो हंसा यथा मानसं, यद्वच्च स्फुटसल्लकीवनयुतां ध्यायन्ति रेवां गजाः । तद्वद्दर्शनलालसाः प्रतिदिनं स्नेहं स्मरामो वयं, धन्यः कोऽपि स वासरोऽत्र भविता यत्राऽऽवयोः संगमः ॥ २८ ॥ एह्यागच्छ समाविशासनमिदं प्रीतोऽस्मि ते दर्शनात्, का वार्त्ता पुरि ? दुर्बलोऽसि च कथं ? कस्माच्चिरं दृश्यसे ? । इत्येवं गृहमागतं प्रणयिनं ये भाषयन्त्यादरात्तेषां युक्तमशङ्कितेन मनसा गन्तुं गृहे सर्वदा ॥ २९ ॥ मा गा इत्यपमङ्गलं

मज इति स्नेहेन हीनं वचस्तिष्ठेति प्रभुता यथारुचि कुरुष्वेत्यत्युदासीनता । किं ते साम्प्रतमाचराम उचितं तस्योपचारं वचः, प्रस्थानोन्मनसीत्यभीष्टमनुजे वक्तुं न शक्ता वयम् ॥ ३० ॥ तुट्टं संधिज्जंतं पमाणहीणं च होइ गंठीलं । विघडि-अघडिअं पिम्मं पुव्वच्छाया न पावेइ ॥ ३१ ॥ सुच्चिअ मित्तो किरइ, जो किर पत्तंसि वसणसमयंसि । नहु होइ पराहुत्तो सेलसिलाघडियपुरिसुव्व ॥ ३२ ॥ अवलोअणेण आलोयणेण गुणकित्तणेण दाणेण । छंदेण वट्टमाणस्स निब्भरं जायए पिम्मं ॥ ३३ ॥ वरं प्राणपरित्यागो, मा वियोगो भवादृशाम् । प्राणा जन्मान्तरेऽपि स्युर्न भवन्ति भवादृशाः ॥ ३४ ॥ आर्तिशोकभयत्राणं, प्रीतिविश्रम्भभाजनम् । केन रत्नमिदं सृष्टं, मित्रमित्यक्षरद्वयम् ॥ ३५ ॥ अद्दंसणेण अइदंसणेण दिट्ठे अणालवंतेणं । माणेण पमाणेण य पंचविहं झिज्जए पिम्मं ॥ ३६ ॥ रत्ता पिच्छंति गुणा दोसा पिच्छंति जे विरच्चंति । मज्झत्थावि अ पुरिसा गुणा य दोसा य पेच्छंते ॥ ३७ ॥

## गुणसंबन्धिसूक्तानि ३५

नागुणी गुणिनं वेत्ति, गुणी गुणिषु मत्सरी । गुणी च गुणरागी च, विरलः सरलो जनः ॥ १ ॥ गुणिनामगुणानां च, दृश्यते महदन्तरम् । हाराः कण्ठगताः स्त्रीणां, नूपुराणि च पादयोः ॥ २ ॥ गुणिनः समीपवर्ती पूज्यो लोकस्य गुणविहीनोऽपि । विमलेक्षणप्रसङ्गादञ्जनमाप्नोति काणाक्षि ॥ ३ ॥ गुणाः कुर्वंति दूतत्वं, दूरेऽपि वसतां सताम् । केतकीगन्धमाघ्रातुं, स्वयमायान्ति षट्पदाः ॥ ४ ॥ दोषाः किं नाम कुर्वन्ति, गुणापहृतचेतसाम् । केतकीकुसुमं भृङ्गः,

खण्ड्यमानोऽपि सेवते ॥ ५ ॥ दोपमपि गुणवति जने दृष्ट्वा गुणरागिणो न खिद्यन्ते । प्रीत्यैव शशिनि पतितं पश्यति
लोकः कलङ्कमपि ॥ ६ ॥ विपमस्थितोऽपि गुणवान् स्फुटतरमाभाति निजगुणैरेव । जलनिधिजलमध्येऽपि हि दीप्यन्ते
किं न रत्नानि? ॥ ७ ॥ आस्तां ते गुणिनस्तावद्भूपिताशेपभूतलाः । येपां गुणानुरागोऽस्ति, साम्प्रतं तेऽपि दुर्लभाः ॥ ८ ॥
नीरसान्यपि रोचन्ते, कर्पासस्य फलानि नः । येपां गुणमयं जन्म, परेपां गुह्यगुप्तये ॥९॥ गुणा यत्र न पूज्यन्ते, का तत्र
गुणिनां गतिः । नग्नक्षपणकग्रामे, रजकः किं करिष्यति? ॥१०॥ स्थानभ्रंशे न भ्रंशेत (भ्रश्येत), गुणिनां गौरवं क्वचित् ।
मूर्द्धानमधिरोप्यन्ते, किं न पुष्पाणि पार्थिवैः? ॥ ११ ॥ गुणा गौरवमायान्ति, न महत्योऽपि संपदः । पूर्णेन्दुः किं
तथा वन्द्यो ?, निष्कलङ्को यथा कृशः ॥ १२ ॥ गौरवाय गुणा एव, न तु ज्ञातेयडम्बरः । वानेयं गृह्यते पुष्पमङ्गजस्त्य-
ज्यते मलः ॥ १३ ॥ गता ये पूज्यत्वं प्रकृतिपुरुषा एव खलु ते, जना दोपत्यागे जनयत समुत्साहमतुलम् । न साधूनां
क्षेत्रं न च भवति नैसर्गिकमिदं, गुणान् यो यो धत्ते स स भवति साधुर्भजत तान् ॥ १४ ॥ पङ्कान्वयमपि सरसिजम-
धिरोहति देवदेवमूर्द्धानम् । पश्यत गुणमहिमानं चरणादपि मृज्यते पङ्कः ॥ १५ ॥ गुणाः सर्वत्र पूज्यन्ते, पितृवंशो
निरर्थकः । वासुदेवं नमस्यन्ति, वसुदेवं न ते नराः ॥ १६ ॥ गुणैरुत्तुङ्गतां याति, नोच्चैरासनसंस्थितः । सुमेरुशिखर-
स्थोऽपि, काकः किं गरुडायते ? ॥ १७ ॥ यत्पयोधरभारेपु, मौक्तिकैर्निहितं पदम् । तदाच्छादितरन्ध्राणां, गुणानामेव
जृम्भितम् ॥ १८ ॥ गुणैरुत्तुङ्गतां याति, न तु जातिप्रभावतः । क्षीरोदधिसमुत्पन्नः, कालकूटः किमुत्तमः ? ॥ १९ ॥
गुणहीणा[1] जे पुरिसा कुलस्स गव्वं वहंति ते मूढा । वंसुप्पन्नेवि धणू गुणहीणे नत्थि टङ्कारो ॥ २० ॥ गौरवं

[1] गुणहीना ये पुरुषाः कुलस्य गर्वं वहन्ति ते मूढाः । वंशोत्पन्नेऽपि धनुषि गुणहीने नास्ति टङ्कारः ॥ २० ॥

लभते लोके, नीचजातोऽपि सद्गुणैः । सौरभ्यात्कस्य नाभीदा, कस्तूरी मृगनाभिजा ? ॥ २१ ॥ जन्मस्थानं न खलु
महिमा वर्णनीयो न वर्णो, दूरे शोभा वपुषि निहिता पङ्कशङ्कां करोति । यद्यप्येवं सकलसुरभिद्रव्यगन्धापहारी, को
जानीते परिमलगुणं वस्तुकस्तूरिकायाः ? ॥ २२ ॥ कौशेयं कृमिजं सुवर्णमुपलाद्दूर्वापि गोलोमतः, पङ्कात्तामरसं शशाङ्क
उदधेरिन्दीवरं गोमयात् । काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना, प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति
किं जन्मना ? ॥ २३ ॥ अन्तर्धृतगुणैरेव, परेषां स्वीयते हृदि । अर्थं समर्थयन्त्येनं, समग्रं कुसुमस्रजः ॥ २४ ॥ कष्टा-
न्यसहमानाना, गुणारोपः कुतो भवेत् ? । वेधवन्धं सहित्वैव, पुष्पालिर्गुणमालिनी ॥ २५ ॥ गुणेष्वनादरं भ्रातः !, पूर्ण-
क्षीरपि मा कृथाः । संपूर्णोऽपि घटः कूपे, गुणच्छेदात्पतत्यधः ॥ २६ ॥ गुणेष्वेवादरः कार्यः, किमाटोपैः प्रयोजनम् ? ।
विकीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ २७ ॥ संधयेत्सरला सूची, वक्रा छेदाय कर्त्तरी । अतो विमुच्य वक्रत्वं,
गुणानेव समाश्रय ॥२८॥ गुणानामेव दौरात्म्याद्धुरि धुर्यो नियोज्यते । असंजातकिणस्कन्धः, सुखं तिष्ठति गौर्गलिः ॥२९॥



गुणा गुणज्ञेषु गुणीभवन्ति, ते निर्गुणं प्राप्य भवन्ति दोषाः । सुस्वादतोयप्रभवा हि नद्यः, समुद्रमासाद्य भवन्त्य-
पेयाः ॥ १ ॥ स्वयं स्वगुणविस्ताराद्गूर्णनाभः पतत्यधः । तमेव संवरन्नूनं, पदमुच्चैर्विगाहते ॥ २ ॥ औचित्यमेकमेकत्र,
गुणानां कोटिरेकतः । विषायते गुणग्राम, औचित्यपरिवर्जितः ॥ ३ ॥ स्वतो न कश्चन गुरुर्लघुर्वापि न कश्चन । उचि-

तानुचिताचारवश्ये गौरवलाघवे ॥ ४ ॥ विवेकिनमनुप्राप्य, गुणा यान्ति समुन्नतिम् । सुतरां रत्नमाभाति, चामीकरनियोजितम् ॥ ५ ॥ निर्विवेकं नरं नारी, प्रायोऽन्यापि न काङ्क्षति । किं पुनः श्रीरियं देवी ?, पुरुषोत्तमवल्लभा ॥ ६ ॥ आकारैरिङ्गितैर्गत्या, चेष्टया भाषणेन च । नेत्रवक्त्रविकारैश्च, लक्ष्यतेऽन्तर्गतं मनः ॥ ७ ॥ पाण्डित्यमेतदेव हि यत्परगुणचित्तवृत्तिविज्ञानम् । शास्त्रविदोऽप्यमतज्ञाः कस्याप्रियतां न गच्छन्ति ? ॥ ८ ॥ परिच्छेदो हि पाण्डित्यं, तदायत्ता विभूतयः । अपरिच्छेदकर्तॄणामापदो हि पदे पदे ॥ ९ ॥ उदीरितोऽर्थः पशुनाऽपि गृह्यते, हयाश्च नागाश्च वहन्ति नोदिताः । अनुक्तमप्यूहति पण्डितो जनः, परेङ्गितज्ञानफला हि बुद्धयः ॥ १० ॥

## सत्सङ्गसूक्तानि ३७

संगतिर्यादृशी तादृक्, ख्यातिरायाति वस्तुनः । रजनिर्ज्योत्स्नया ज्योत्स्नी, तमसा च तमस्विनी ॥ १ ॥ लोकरूढिरिह प्रौढिरस्तु वस्तु यथा तथा । दधि मङ्गलधौरेयं, न पुनर्दुग्धमभ्यधुः ॥ २ ॥ क्षणादसारं सारं वा, वस्तु लोकैः परीक्ष्यते । निश्चिनोति मरुत्तूर्णं, तुलोच्चयशिलोच्चयौ ॥ ३ ॥ गुणवज्जनसंसर्गाद्याति स्वल्पोऽपि गौरवम् । पुष्पमालानुषङ्गेण, सूत्रं शिरसि धार्यते ॥ ४ ॥ गुणिनः समीपवर्ती पूज्यो लोकस्य गुणविहीनोऽपि । विमलेक्षणप्रसङ्गादञ्जनमाप्नोति काणाक्षि ॥ ५ ॥ नीचोऽपि परिगृहीतो, महात्मभिः परमुपैति परभागम् । स्फटिकोपलोऽपि रक्तः कुशलैर्माणिक्यमनुकुरुते ॥ ६ ॥ उन्नतघनमध्यगतं निर्गुणमपि वहति सुरधनुःशोभाम् । तेन महद्भिः सार्द्धं संवासः प्रार्थ्यते सद्भिः ॥ ७ ॥ आस्तां तावद्दिगन्तमथितसुयशसां संगतिः सज्जनानां, तैः सार्द्धं वैरयोगोऽप्यतिशयमहतीमुन्नतिं संतनोति । लोके

विवेकद्वारं ३६ श्लो. १०

सत्संगद्वारं ३७ श्लो. २३

कस्यागमिष्यत् श्रुतिपथमवपुरेकस्रौषोऽपि राहुस्त्रैलोक्यख्यातधाम्नोर्यदि रविशशिनोर्वैरतां नाकरिष्यत् ? ॥ ८ ॥ महिमानं महीयांसं, सङ्गः सूते महात्मनाम् । मन्दाकिनीमृदो वन्द्याम्त्रिवेदीवेदिनामपि ॥ ९ ॥ इह भुवि कलयति लघुरपि महतां महिम कमपि महिमानम् । लङ्घयति शशिनि लीनः खमण्डलं हेलया हरिणः ॥ १० ॥ सङ्गः सर्वात्मना त्याज्यः, स नैरपक्तुं न शक्यते । स सद्भिः सह कर्त्तव्यः, सन्तः सङ्गस्य भेषजम् ॥ ११ ॥ चन्दनं शीतलं लोके, चन्दनादपि चन्द्रमाः । चन्द्रचन्दनयोर्मध्ये, शीतलः साधुसंगमः ॥ १२ ॥ संसारकटुवृक्षस्य, द्वे फले ह्यमृतोपमे । सुभाषितरसास्वादः, संगतिः सुजने जने ॥ १३ ॥ एकं हि चक्षुरमलं सहजो विवेकस्तद्वद्भिरेव सह संवसतिर्द्वितीयम् । एतद्द्वयं भुवि न यस्य स तत्त्वतोऽन्धस्तस्यापमार्गचलने खलु कोऽपराधः ? ॥ १४ ॥ संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते, मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते । स्वातौ सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं, प्रायेणाधममध्यमोत्तमगुणः संवासतः संभवेत् ॥ १५ ॥ एके भेजुर्यतिकरगतास्तुम्बकाः पात्रलीलां, गायन्त्यन्ये सरसमधुरं शुद्धवंशे विलग्नाः । एके केचित्तु ग्रथितसुगुणा दुस्तरं तारयन्ति, तेषां मध्ये ज्वलितहृदया रक्तमन्ये पिबन्ति ॥ १६ ॥ ऐकह वल्लीजायाण पिच्छह तुंबाण अंतरं गुरुअं । एके पिअंति रुहिरं दुत्तरं तारइ पुणो अन्ने[1] ॥ १७ ॥ माताऽप्येका पिताऽप्येको, मम तस्य च पक्षिणः । अहं मुनिभिरानीतः, स च नीतो गवाशनैः ॥ १८ ॥ गवाशनानां स गिरः शृणोति, अहं च राजन्मुनिपुङ्गवानाम् । प्रत्यक्षमेतद्भवताऽपि दृष्टं, संसर्गजा दोषगुणा भवन्ति ॥ १९ ॥ धर्मं ध्वस्तदयो यशश्च्युतनयो वित्तं प्रमत्तः

1 एकवल्लीजातयोस्तुम्बयोः पश्यतान्तरं गुरुकम् । एके पिबन्ति रुधिरं दुस्तरं तारयन्ति पुनरन्ये ॥ १७ ॥

पुमान्, काव्यं निष्प्रतिभस्तपः शमदयाशून्योऽल्पमेधाः श्रुतम् । वस्त्वालोकमलोचनश्चलमना ध्यानं च वाञ्छत्यसौ, यः सङ्गं गुणिनां विमुच्य विमतिः कल्याणमाकाङ्क्षति ॥ २० ॥ संसारवासखिन्नानां, तिस्रो विश्रामभूमयः । अपत्यं च कलत्रं च, साधुसंगतिरेव च ॥ २१ ॥ धनाढ्यता राजकुलेऽभिमानं, प्रियानुकूला तनया विनीताः । धर्मे मतिः सज्जनसंगतिश्च, स्वर्गाः षडेते जगतीतलान्तः ॥ २२ ॥ नैवास्वाद्यरसायनस्य रसनात्पीयूषपानाच्च नो, नो साम्राज्यपदाप्तितः प्रतिदिनं नो पुत्रलाभादपि । नैवायत्नसुरत्नलाभवशतो नैवान्यतोऽप्यस्ति सा, या संप्रीतिरुदेति सज्जननृणां सद्भिः समं संगमात् ॥ २३ ॥

## कुसङ्गसंवन्धिसूक्तानि ३८

स्पृशन्ति भर्तुः प्रायेण, स्वभावमनुजीविनः । लवणोदन्वतस्तीरभुवोऽपि क्षारकुक्षयः ॥ १ ॥ कुसंगतेः कुवुद्धिः स्यात्कुवुद्धेः कुप्रवर्त्तनम् । कुप्रवृत्तेर्भवेज्जन्तुर्भाजनं दुःखसंततेः ॥ २ ॥ दुर्वृत्तसङ्गतिरनर्थपरम्पराया, हेतुः सतां भवति किं वचनीयमेतत् ? । लङ्केश्वरो हरति दाशरथेः कलत्रं, प्राप्नोति वन्धमथ दक्षिणसिन्धुनाथः ॥ ३ ॥ तेजोमयोऽपि पूज्योऽपि, घातिना नीचधातुना । लोहेन संगतो वह्निः, सहते घनताडनम् ॥ ४ ॥ सर्वथा नष्टनैकव्यं, विपदे वृत्तशालिनाम् । वारिहारिघटीपार्श्वे, ताड्यते पश्य झल्लरी ॥ ५ ॥ वरं पर्वतदुर्गेषु, भ्रान्तं वनचरैः सह । न मूर्खजनसंसर्गः, सुरेन्द्रभवनेष्वपि ॥ ६॥ महतामप्यहो दैवाद्दुर्वारा नीचसंगतिः । कर्पूरस्य कथं न स्यादङ्गारेण समं रतिः ? ॥ ७ ॥ खलसं-

गेण विमुक्कं पिच्छह तिल्लेण जं फलं पत्तं । सव्वंगपहाणंगं पहुसीसं पाविअं तेण ॥ ८ ॥ स्वच्छसङ्गो विशेषेण, दोषाय
कलुषात्मनाम् । किं न पानीयसंपर्काल्लोहं स्यान्मलसंकुलम् ॥ ९ ॥ भवति किल विनाशो दुर्जनैः संगतानामिति
वदति जनोऽयं सर्वमेतद्धि मिथ्या । भुजगफणमणीनां किं निमित्तं हि राजन् !, न भवति विषदोषो निर्विषो वा
भुजङ्गः ? ॥ १० ॥ असाधुः साधुर्वा भवति खलु जात्यैव पुरुषो, न सङ्गाद्दौर्जन्यं न च सुजनता कस्यचिदपि । समाने
संबन्धे मणिभुजगयोर्जन्मजनिते, मणिर्नाहेर्दोषान् स्पृशति न च सर्पो मणिगुणान् ॥ ११ ॥ जो जस्स खलु सहावो
सज्जणसंगेण सो तहा चेव । बाणो धणुहेवि ठिओ गुणसहिओ तहवि मारेइ ॥ १२ ॥ निजकर्मकरणदक्षः सह वसति
दुरात्मनापि निरपायम् । किं न कुशलेन रसना दशनानामन्तरे चरति ॥ १३ ॥

## योग्यसंबन्धिसूक्तानि ३९

स्वभावो नोपदेशेन, शक्यते कर्त्तुमन्यथा । वक्रमेव शुनः पुच्छं, षण्मासनलिकाधृतम् ॥ १ ॥ यस्य न सहजो बोधः
पुरतः किं तस्य भाषितैर्बहुभिः ? । नलिकाधृतमपि सततं, न भवति सरलं शुनः पुच्छम् ॥ २ ॥ चूताङ्कुरकवलनतोऽपि
कोकिलः स्वनति चारु न तु काकः । योग्यस्य जायते खलु हेतोरपि नेतरस्य गुणः ॥ ३ ॥ वक्तुर्विशेषमधुरैर्वचनमपञ्चे-

१ खलसङ्गेन विमुक्तौ पश्यत तैलेन यत्फलं प्राप्तम् । सर्वाङ्गप्रधानाङ्गं प्रभुशिरः प्राप्तं तेन ॥ ८ ॥ २ यो यस्य खलु स्वभावः सज्जनसङ्गे स तथैव ।
बाणो धनुष्यपि स्थितो गुणसहितस्तथापि मारयति ॥ १२ ॥

श्चित्तं भिनत्ति रसिकस्य न चेतरस्य । पीयूषपूररचितैरपि चन्द्रपादैर्ये चन्द्रकान्तमणयः खलु ते द्रवन्ति ॥ ४ ॥ ननु सर्वविदोऽपि राजते, न वचः श्रोतरि बोधवर्जिते । परिणेतरि नष्टलोचने, सफलः किं नु कलत्रविभ्रमः ? ॥ ५ ॥ विचारसारा अपि शास्त्रवाचो, मूढैर्गृहीता विफला भवन्ति । मितंपचग्राम्यदरिद्रदाराः, कुर्वन्त्युदारा अपि किं सुजात्यः ॥ ६ ॥ विहितः सतामभूमौ महतामपि भवति निष्फलो यत्नः । व्रजति रसातलमम्भो जलदेन मरुस्थलीनिहितम् ॥ ७ ॥ अलङ्कारोऽप्यलङ्कर्तुमलं स्थाने नियोजितः । श्रियं हारस्रजः कण्ठे, दधते न तु पादयोः ॥ ८ ॥ उपदेशो हि मूर्खाणां, प्रकोपाय न शान्तये । पयःपानं भुजङ्गानां, केवलं विषवृद्धये ॥ ९ ॥ [1]कुग्गहगहगहिआणं मूढो जो देइ धम्मउवएसं । सो चम्मासीकुक्कुरवयणंमि खवेइ कप्पूरं ॥ १० ॥

## कलासंबन्धिसूक्तानि ४०

बावत्तरिकलकुसला पंडिअपुरिसा अपंडिआ चेव । सव्वकलाणं पवरं जे धम्मकलं न याणंति ॥ १ ॥ तं रूवं जत्थ गुणा तं मित्तं जं निरंतरं वसणे । सो अत्थो जो हत्थे तं विन्नाणं जहिं धम्मो ॥ २ ॥ वरमेका कला रम्या, ययाऽधःक्रियते भवः । बह्वीभिरपि किं ताभिः, कलङ्को यासु वर्द्धते ॥ ३ ॥ रज्जोरप्युपरि भ्रमन्ति कतिचित्तीव्राभियोगान्नरास्तर्क्व्याकरणादिशास्त्रनिपुणाभ्यासस्तु शिल्पं कियत् । यद्गाढो विनयः श्रुतं यदमलं यद्वीतरागं मनो यत्सौजन्यमख-

[1] कुग्रहगृहीतेभ्यो मूढो यो ददाति धर्मोपदेशम् । स चर्मासिकुर्कुरवदने क्षिपति कर्पूरम् ॥ १० ॥

जाणई सोच्चा, जं सेयं तं समायरे ॥ ८ ॥ जिणवयणमोयगस्स उ रत्तिं दिवसे य खज्जमाणस्स । तत्तिं वुहो न वच्चइ हेउसहस्सोवगूढस्स ॥ ९ ॥ सुअसायरो अपारो आउं थोवं जिआ य दुम्मेहा । तं किंपि सिक्खिअवं जं कज्जकरं च थोवं च ॥ १० ॥ सव्वंपि लक्खणोवेयं, समहिट्ठंति देवया । सुत्तं च लक्खणोवेयं, किं नऽहिट्ठंति देवया ? ॥ ११ ॥

## आगमसंवन्धिसूक्तानि ४२

लेखयन्ति नरा धन्या, ये जैनागमपुस्तकान् । ते सर्वं वाङ्मयं ज्ञात्वा, सिद्धिं यान्ति न संशयः ॥ १ ॥ ये लेखयन्ति जिनशासनपुस्तकानि, व्याख्यानयन्ति च पठन्ति च पाठयन्ति । शृण्वन्ति रक्षणविधौ च समाद्रियन्ते, ते मर्त्यदेवशिवशर्म नरा लभन्ते ॥ २ ॥ विलेख्य कल्पं विधिना श्रुतस्य, विधाय पूजां शुभधीः शृणोति । कृतोपवासो हृदि शुद्धभावो, भवे तृतीये लभते भवान्तम् ॥ ३ ॥ सव्वं च लक्खणोवेयं, समहिट्ठंति देवया । सुत्तं च लक्खणोवेयं, जेणं सव्वन्नुभासिअं ॥ ४ ॥ सव्वनईणं जा हुज्ज वालुआ सव्वउदहिण जं सलिलं । इत्तोवि अणंतगुणो अत्थो एगस्स सुत्तस्स ॥ ५ ॥ न ते नरा दुर्गतिमाप्नुवन्ति, न मूकतां नैव जडस्वभावम् । नैवान्धतां बुद्धिविहीनतां च, ये लेखयन्त्यागमपुस्तकानि ॥ ६ ॥ वालस्त्रीमन्दमूर्खाणां, नृणां चारित्रकाङ्क्षिणाम् । अनुग्रहार्थं तत्त्वज्ञैः, सिद्धान्तः प्राकृतः कृतः ॥ ७ ॥ लद्धं अलद्धपुव्वं जिणवयणरसायणं अमयभूअं । गहिओ सुग्गइमग्गो नाहं मरणस्स वीहेमि ॥ ८ ॥ नापण्डिताः

---

१ सर्वनदीनां या भवन्ति वालुकाः सर्वोदधीनां यत्सलिलम् । इतोऽप्यनन्तगुणोऽर्थ एकस्य सूत्रस्य ॥ ५ ॥ २ लब्धमलब्धपूर्वं जिनवचनरसायनममृतभूतम् । गृहीतः सुगतिमार्गः नाहं मरणाद्बिभेमि ॥ ८ ॥

मक्षिकाः पद्मवने पतन्ति ॥ ९ ॥ मोहं
नदिमलनाननीयं, जैने मते मत्तहिते रमन्ते । सुगन्धिनि श्रीमति सत्पवित्रे, न मक्षिकाः पद्मवने पतन्ति ॥ ९ ॥ मोहं धिनत्ति, संवेगमुत्तमयति प्रशमं तनोति । सूतेऽनुरागमधिकं मुदमादधाति, जैनं वचः श्रवणतः
भियो हरति कामगमुच्छिनत्ति, संवेगमुत्तमयति प्रशमं तनोति । सूतेऽनुरागमधिकं मुदमादधाति, जैनं वचः श्रवणतः
किमु नो विपत्ते ? ॥ १० ॥ न देवं नादेवं न गुरुमकलङ्कं न कुगुरुं, न धर्मं नाधर्मं न गुणपरिणद्धं न विगुणम् । न
मलं नागल्यं न हितमहितं नापि निपुणं, विलोकन्ते लोका जिनवचनचक्षुर्विरहिताः ॥ ११ ॥ राज्यं वाजिविभूतिदन्ति-
निवहे पादातिसद्विक्रमं, संकल्पार्थदकल्पपादपलता धेनुर्वरा कामदा । चिन्तामात्रविचिन्तितप्रद इतश्चिन्तामणिः प्राप्यते,
पुण्यानां भवयारिधौ जिनपतेर्बोहित्थकल्पं वचः ॥ १२ ॥

ज्ञानसंवर्द्धिसूक्तानि ४३

न शूकः क्वापि मांसाशी, पञ्जरे पाठमात्रतः । यस्याभ्यासः श्रुतांशेऽपि, तस्य हिंसामतिः कुतः ? ॥ १ ॥ मलिनस्य यथाऽत्यन्तं, जलं वस्त्रस्य शोधकम् । अन्तःकरणरत्नस्य, तथा शास्त्रं विदुर्बुधाः ॥२॥ विदुरः प्राह—आसनं सुतसंकीर्णं, गृहं विकीर्णमन्दि(माजि)रम् । हृदयं शास्त्रसंकीर्णं, देहि मे मधुसूदन ! ॥३॥ तृतीयं लोचनं ज्ञानं, द्वितीयो हि दिवाकरः । अचौर्यहरणं वित्तं, विना स्वर्णं विभूषणम् ॥ ४ ॥ आहारनिद्राभयमैथुनानि, सामान्यमेतत्पशुभिर्नराणाम् । ज्ञानं विशेषः खलु मानुषाणां, ज्ञानेन हीनाः पशवो मनुष्याः ॥ ५ ॥ ज्ञानाद्विदन्ति खलु कृत्यमकृत्यजातं, ज्ञानाच्चरित्रममलं च समाचरन्ति । ज्ञानाच्च भव्यभविनः शिवमाप्नुवन्ति, ज्ञानं हि मूलमतुलं सकलश्रियां तत् ॥ ६ ॥ ज्ञानं स्यात्कुमतान्धकारतरणिर्ज्ञानं जगल्लोचनं, ज्ञानं नीतितरङ्गिणीकुलगिरिर्ज्ञानं कषायापहम् । ज्ञानं निर्वृतिवश्यमन्त्रममलं ज्ञानं मनः-

पावनं, ज्ञानं स्वर्गगतिप्रयाणपटहं ज्ञानं निदानं श्रियः ॥ ७ ॥ ज्ञानं कर्ममहीध्रभेदकुलिशं शंसन्ति मोहापहं, ज्ञानं भूषण-मङ्गिनां वरधनं ज्ञानं जगद्दीपनम्। एतत्तत्त्वमतत्त्वमेतदपरं ज्ञानेन विज्ञायते, लोकालोकविलोकनैकपटवः स्युर्ज्ञानदाना-ज्जनाः ॥ ८ ॥ तद् ज्ञानमेव न भवति यस्मिन्नुदिते विभाति रागगणः। तमसः कुतोऽस्ति शक्तिर्दिनकरकिरणाग्रतः स्थातुम्? ॥ ९ ॥ अज्ञानं खलु कष्टं क्रोधादिभ्योऽपि सर्वपापेभ्यः। अर्थं हितमहितं वा न वेत्ति येनावृतो लोकः ॥ १० ॥

अहङ्कारसंबन्धिसूक्तानि ४४

ज्ञानं मददर्पहरं माद्यति यस्तेन तस्य को वैद्यः ?। अमृतं यस्य विषायति, तस्य चिकित्सा कथं क्रियते? ॥ १ ॥ विद्ययैव मदो येषां, कार्पण्यं विभवे सति। तेषां दैवाभिभूतानां, सलिलादग्निरुत्थितः ॥२॥ अहंकारे सति प्रौढे, वदत्येवं गुणावली। अहं कारे पतिष्यामि, समायाता त्वदंतिकम् ॥ ३ ॥ विषभारसहस्रेण, वासुकिर्नैव गर्जति। वृश्चिकस्तृण-मात्रेणाप्यूर्ध्वं वहति कण्टकम् ॥ ४ ॥ त्यागिना किं दरिद्रेण?, किं कुलीनेन पापिना?। दुष्टेन किं कदर्येण?, दर्पान्धेन बुधेन किं? ॥ ५ ॥ सा विद्या या मदं हन्ति, सा श्रीर्याऽर्थिषु दीयते। धर्मानुसारिणी या च, सा बुद्धिरभिधीयते ॥ ६ ॥ बलिभ्यो बलिनः सन्ति, वादिभ्यः सन्ति वादिनः। धनिभ्यो धनिनः सन्ति, तस्माद्दर्पं त्यजेद्बुधः ॥ ७ ॥ सर्वज्ञता नास्ति मनुष्यलोके, नात्यन्तमूर्खोऽपि हि कश्चिदस्ति। ज्ञानेन मध्याधमसत्तमेन, यो यद्विजानाति स तेन विज्ञः ॥ ८ ॥ बोद्धारो मत्सरग्रस्ताः, प्रभवः स्मयदूषिताः। अबोधोपहताश्चान्ये, जीर्णमङ्गे सुभाषितम् ॥ ९ ॥ उत्क्षिप्य टिट्टिभः पादमास्ते भङ्ग-भयाद्भुवः। स्वचित्तकल्पितो गर्वः, प्राणिनां कोपयुज्यते? ॥ १० ॥ अभाललोचनः शम्भुर्द्विबाहुरपरो हरिः। अचतुर्वदनो

प्रज्ञा, ... ॥ ११ ॥ अष्टादश पुराणान्यष्टौ व्याकरणानि च । तावत्सर्वमहं वेद्मि, यावत्कोऽपि न
पृच्छति ॥ १२ ॥

...शिरोमनत्यनिस्मूक्तानि ८५

...ग्गिन पयं पढेइ पएणेण वा सिलोगद्धं । उज्जोगं मा मुंचसु जइ इच्छसि सिक्खिउं नाणं ॥ १ ॥ नानाशा-
...गुणामृतरसैः श्रोत्रोत्सवं कुर्वतां, येषां यान्ति दिनानि पण्डितजनव्यायामखिन्नात्मनाम् । तेषां जन्म च जीवितं
... मनश्च सकलं भूर्भूषिता, शेषैः किं पशुवद्विवेकविकलैर्भूभारभूतैर्नरैः? ॥ २ ॥ पठ पुत्र! किमालस्यमपठो भारवाहकः ।
...पठितः पूज्यते लोके, पठ पुत्र! दिने दिने ॥ ३ ॥ काव्यशास्त्रविनोदेन, कालो गच्छति धीमताम् । व्यसनेन हि मूर्खाणां,
...निद्रया कलहेन वा ॥ ४ ॥ गृहीत इव केशेषु, मृत्युना धर्ममाचरेत् । अजरामरवत्प्राज्ञो, विद्यामर्थं च चिन्तयेत् ॥ ५ ॥
...गतोऽपि पतति मात्रा, विद्या मर्त्यात्मना भृशम् । यदीह फलदा न स्यात्, सुलभा साऽन्यजन्मनि ॥ ६ ॥ सन्तोषस्त्रिषु
...कार्यः, स्वदारे भोजने धने । त्रिषु चैव न कर्त्तव्यो, दाने चाध्ययने तपे ॥ ७ ॥ श्लोकार्द्धं श्लोकपादं वा, समस्तं श्लोक-
...मेव वा । अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥ ८ ॥ पदेनैकेन मेधावी, पदानां विन्दते शतम् । मूर्खः पदसहस्रेण,
पदमेकं न विन्दते ॥ ९ ॥ पण्डितेषु गुणाः सर्वे, मूर्खे दोषास्तु केवलम् । तस्मान्मूर्खसहस्रेण, प्राज्ञ एको न लभ्यते ॥ १० ॥

१ पठति च दिवसेन पदं पारयति पदेन वा श्लोकार्धम् । उद्योगं मा मुञ्च यदीच्छसि शिक्षितुं ज्ञानम् ॥ १ ॥

अनभ्यासे विषं शास्त्रमजीर्णे भोजनं विषम्। विषं गोष्ठी दरिद्रस्य, वृद्धस्य तरुणी विषम् ॥ ११ ॥ विषं कुपठिता विद्या,
विषं व्याधिरुपेक्षितः। विषं गोष्ठी दरिद्रस्य, वृद्धस्य तरुणी विषम् ॥ १२ ॥ श्रद्धाधोपौ यदि स्यातां, प्रज्ञया किं प्रयोज-
नम्?। तावेव यदि न स्यातां, प्रज्ञया किं प्रयोजनम्? ॥ १३ ॥ विनयेन विद्या ग्राह्या, पुष्कलेन धनेन वा। अथवा विद्य-
या विद्या, चतुर्थो नैव विद्यते ॥ १४ ॥ क्रमेण शैलः सलिलेन भिद्यते, क्रमेण वाल्मीकशिखाऽभिवर्द्धते। क्रमेण विद्या
विनयेन प्राप्यते, क्रमेण मोक्षस्तपसाऽधिगम्यते ॥ १५ ॥ आरोग्यबुद्धिविनयोद्यमशास्त्ररागाः, पञ्चान्तराः पठनसिद्धि-
गुणा भवन्ति। आचार्यपुस्तकनिवाससहायद्रव्यं (वल्भाः), वाह्याश्च पञ्च पठनं परिवर्द्धयन्ति ॥ १६ ॥ ज्ञानाधिकैरहरहः
परिघृष्यमाणाः, प्रायेण मन्दमतयोऽपि भवन्ति तज्ज्ञाः। संसर्गजं गुणमवाप्य हि पाटलायास्तोयं कपालशकलान्यपि
वासयन्ति ॥ १७ ॥ सुखार्थी त्यजते विद्यां, विद्यार्थी त्यजते सुखम्। सुखार्थिनः कुतो विद्या?, विद्यार्थिनः कुतः सुखम्?
॥ १८ ॥ अलसो मन्दबुद्धिश्च, सुखितो व्याधितस्तथा। निद्रालुः कामुकश्चेति, षडेते शास्त्रवर्जिताः ॥ १९ ॥ आलस्येन
हता विद्या, आलापेन कुलस्त्रियः। अल्पबीजं हतं क्षेत्रं, हतं सैन्यमनायकम् ॥ २० ॥

## अथ विद्याप्रभावसूक्तानि ४६

विद्वत्त्वं च नृपत्वं च, नैव तुल्यं कदाचन। स्वदेशे पूज्यते राजा, विद्वान् सर्वत्र पूज्यते ॥ १ ॥ लक्ष्मीः सुवर्णरू-
पाऽपि, पाणिपादेषु योज्यते। भूषयत्यन्तरात्मानं, वर्णरूपाऽपि भारती ॥ २ ॥ न हीनो धनहीनोऽपि, धनं वा कस्य सु-
स्थिरम्?। विद्याहीनस्तु यः कोऽपि, स हीनः सर्ववस्तुषु ॥ ३ ॥ यद्यपि बहु नाधीषे तथापि भव संस्कृते प्रयोगज्ञः।

४५ विद्योद्यमे २०
४६ विद्याप्रभावे २१

॥ ३९ ॥

पठितस्तद्विदां पुरः । अज्ञाने श्रोतरि
येन हि यातं जातं सफलं शकलं शकृत् सकृत् ॥ ४ ॥ श्लोकः सुश्लोकतामेति,
न गुह्यरक्षणे दक्षं, न दंशमश-
प्राप्ते, श्लोकस्तदा भवेत् ॥ ५ ॥ शुनः पुच्छमिव व्यर्थं, विना ज्ञानं हि जीवितम् ।
निर्गन्धा इव किंशुकाः ॥ ७ ॥ यद्यपि
कापहम् ॥ ६ ॥ रूपयौवनसंपन्ना, विशालकुलसंभवाः । विद्याहीना न शोभन्ते,
सद्विद्यः ॥ ८ ॥ पुरुषस्य परं विभूषणं,
भवति विरूपो यत्रालंकारवेषपरिहीणः । सज्जनसभां प्रविष्टः शोभामुद्वहति
९ ॥ वरं दरिद्रोऽपि विचक्षणो नरो,
परमार्थ श्रुतमेव नापरम् । प्रशमो विनयश्च तत्फलं; प्रकटं नीतिविदः प्रचक्षते ॥
विद्या नाम
नैवार्थयुक्तोऽपि कुशास्त्रवर्जितः । विचक्षणः कार्पटिकोऽपि शोभते, न चापि मूर्खः कनकैरलङ्कृतः ॥ १० ॥
विद्या बन्धुजनो विदेशगमने
नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं, विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।
शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमा,
विद्या परं दैवतं, विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः ॥११॥
तज्जाड्यं वसुधाधिपस्य सुधियो ह्यर्थं विनाऽपीश्वराः, कुत्स्याः स्युः
विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः ।
हर्तुर्याति न गोचरं किमपि शं पुष्णाति सर्वात्मनाऽप्यर्थिभ्यः प्रतिपाद्यमा-
कुपरीक्षका हि मणयो यैरर्घतः पतिताः ॥१२॥
येषां तान् प्रति मानमुज्झत जनाः कस्तैः
नमनिशं वृद्धिं परां गच्छति । कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं,
दरिद्रस्येव वेश्मनि ॥ १४ ॥
सह स्पर्धते ? ॥ १३ ॥ लक्षणेन विना विद्या, निर्मलापि न शोभते । युवती रूपसंपन्ना,
नासिका ॥ १५ ॥ कुलीनाः
सुलभानि हि शास्त्राणि, गुरूपदेशस्तु दुर्लभः । शिरो वहति पुष्पाणि, गन्धं जानाति
सुलभाः प्रायः, सुलभाः शास्त्रशालिनः । सुशीलाश्चापि सुलभा, दुर्लभा भुवि तात्त्विकाः ॥ १६ ॥ शास्त्रावगाहपरिघट्टन-

तत्परोऽपि, नैवाबुधः समधिगच्छति वस्तुतत्त्वम् । नानाप्रकाररसमध्यगताऽपि दर्वी, स्वादं रसस्य सुचिरादपि नैव वेत्ति ॥ १७ ॥ यस्य नास्ति स्वयं प्रज्ञा, शास्त्रं तस्य करोति किम्? । लोचनाभ्यां विहीनस्य, दर्पणः किं करिष्यति? ॥ १८ ॥ पापठीति सकलं च वाङ्मयं, बोबुधीति न च किञ्चिदप्यसौ । रत्नभारमिव गर्दभः सदा, वावहीति किल बोभुजीति नो ॥ १९ ॥ जहा खरो चंदनभारवाही, भारस्स भागी नहु चंदणस्स । एवं खु नाणी चरणेण हीणो, नाणस्स भागी नहु सुगईए ॥ २० ॥ परीक्षा सर्वशास्त्रेषु, विधातव्या विचक्षणैः । न कुशास्त्रप्रणीतं हि, कर्त्तव्यं विषभक्षणम् ॥ २१ ॥

## मूर्खसंबन्धिसूक्तानि ४७

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः । ज्ञानलवदुर्विदग्धं ब्रह्माऽपि तं नरं न रञ्जयति ॥ १ ॥ यदा किञ्चिज्ज्ञोऽहं गज इव मदान्धः समभवं, तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः । यदा किञ्चित्किञ्चिद्बुधजनसकाशादवगतं, तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ २ ॥ शक्यो वारयितुं जलेन दहनश्छत्रेण सूर्याऽऽतपो, नागेन्द्रो निशिताङ्कुशेन समदं दंडेन गोगर्दभौ । व्याधिर्भेषजसंग्रहेण विविधैर्मन्त्रप्रयोगैर्विषं, सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ३ ॥ खण्डखण्डेषु पाण्डित्यं, क्रयक्रीतं च मैथुनम् । भोजनं च पराधीनं, तिस्रः पुंसां विडम्बनाः ॥ ४ ॥ गुरूणां विद्यया विद्वान्, पितृवित्तेन वित्तवान् । शूरः परसहायेन, नन्दिष्यति कियच्चिरम्? ॥ ५ ॥

१ यथा खरश्चन्दनभारवाही भारस्य भागी नैव चन्दनस्य । एवमेव ज्ञानी चरणेन हीनो ज्ञानस्य भागी नैव सुगतेः ॥ २० ॥

परकाव्यैः कवित्वं यत्रयाँ याचितभूषणैः । या च याचनया वृत्तिस्तदेतन्मूर्खलक्षणम् ॥ ६ ॥ दैवखातं च वदनमात्मायत्तं न वाङ्मयम् । श्रोतारः सन्ति सर्वत्र, निर्लज्जः को न पण्डितः? ॥ ७ ॥ खादन्न गच्छामि हसन्न जल्पे, दत्तं न शोचामि कृतं नु मन्ये । द्वाभ्यां तृतीयो न भवामि राजन्नस्मादृशा नैव भवन्ति मूर्खाः ॥ ८ ॥ मूर्खत्वं च सखे! ममापि रुचितं तस्मिन् यदष्टौ गुणा, निश्चिन्तो बहुभोजनोऽत्रपमना नक्तंदिवाशायकः । कार्याकार्यविचारणान्धबधिरो मानापमाने समः, प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥ ९ ॥ प्रकाशिताशेषनिजास्यरन्ध्रा, लघुत्वमायान्ति जडा हसन्तः । किञ्चिच्चलचारुकपोलमूलाः, सन्तो न दन्तानुपदर्शयन्ति ॥ १० ॥

## भारतीसंबन्धिसूक्तानि ४८

पातु वो निकषग्रावा, मतिहेम्नः सरस्वती । प्राज्ञेतरपरिच्छेदं, वचसैव करोति या ॥ १ ॥ श्रुतसंपदः कवीनामुक्तिभिरेव प्रकाशतां यान्ति । सिन्धोरपारजलभरमुद्गारा एव कथयन्ति ॥ २ ॥ अव्यये व्ययमायाति, व्यये याति सुविस्तरम् । अपूर्वः कोऽपि भण्डारस्तव भारति! दृश्यते ॥ ३ ॥ लक्ष्मीर्दधातु विद्वेषं, भारत्यां जडराजसूः । दृश्यते त्वक्षयः कोशः, साक्षाद्वाक्यया न तु श्रियः ॥ ४ ॥ जयत्यन्यः स कोऽप्यध्या, भारत्याः खमिवामलः । क्षुण्णोऽपि विबुधैर्बाढं, विभास्यक्षुण्ण एव यः ॥ ५ ॥ चंदा हरसिरि तुजि वसे, चरससि अमिअरसेण । हं तुं पुच्छउं तुह कारणिं, खीणओ कवण गुणेण? ॥६॥ वासो जडाण मज्झे दोजिहा सामिसवणि पुण लग्गा । जीविज्जइ तं चज्जं किसणत्तणं किम्हओ कीस? ॥७॥

## कविसंवन्धिसूक्तानि ४९

अकवित्वं परस्तावत्कलङ्कः पाठशालिनाम् । अन्यकाव्यैः कवित्वं तु, कलङ्कस्यापि चूलिका ॥ १ ॥ सन्त्येके वहलालापाः, कवयो वालका इव । अप्रगल्भाः पदन्यासे, जननीरागहेतवः ॥ २ ॥ स्तोकाऽपि वन्द्यते लोकैः, कस्यापि सुकवेः कृतिः । कलेव हरिणाङ्कस्य, स्फुरन्ती नवरेखया ॥ ३ ॥ किं कवेस्तस्य काव्येन?, किं काण्डेन धनुष्मतः? । परस्य हृदये लग्नं, न घूर्णयति यच्छिरः ॥ ४ ॥ किं तेन किल काव्येन, मृग्यमानस्य यस्य ताः । उदधेरिव नायान्ति, रसामृतपरम्पराः ॥ ५ ॥ यन्नेत्रैस्त्रिभिरीक्षते न गिरिशो नाष्टाभिरप्यब्जभूः, स्कन्दो द्वादशभिर्न वा न मघवा चक्षुःसहस्रेण वा । संभूयापि जगत्रयस्य नयनैर्द्रष्टुं न यत्पार्यते, प्रत्याहृत्य दृशौ समाहितधियः पश्यन्ति तत्पण्डिताः ॥ ६ ॥ कवयः कालिदासाद्याः, कवयो वयमप्यमी । पर्वते परमाणौ च, पदार्थत्वं व्यवस्थितम् ॥ ७ ॥ उत्फुल्लगल्लैरालापाः, क्रियन्ते दुर्मुखैः सुखम् । जानाति हि पुनः सम्यक्, कविरेव कवेः श्रमम् ॥ ८ ॥ शमिनां दमिनां यमिनां विवादतो जायते तपोलोपः । सति सामर्थ्ये तस्माद्वयं विवादं न कुर्मोऽत्र ॥ ९ ॥ मातुः पुरो मातुलवर्णनं तल्लंकानगर्यां लहरीयकं तत् । तत्प्राभृतं लावणमम्बुराशेः, सतां पुरो यद्वचसां विलासः ॥ १० ॥ विरला जाणंति गुणा विरला विरयंति ललिअकव्वाइं । विरला साहसधणा परदुक्खे दुक्खिआ विरला ॥ ११ ॥ अत्थालोयण तरला इअरकईणं भवंति वुद्धीओ । अत्थु च्चेव निरारंभमिंति हिययं कइंदाणं ॥ १२ ॥ सहदेसे विन्नाणं पच्चक्खकईहिं जं कयं कव्वं । निअमहिलाण य

[1] विरला जानन्ति गुणान् विरला विरचयन्ति ललितकाव्यानि । विरलाः साहसधनाः परदुःखे दुःखिता विरलाः ॥ ११ ॥

पाइअ कव्व सुसीलधणु अंगह उट्टिअ गेउ । गोट्ठीसरिसी सज्जणइं रयणचउ-
क्कं तिन्निवि लोए न अग्घंति ॥ १३ ॥ करस न हरंति हिययं बालाण य मम्म-
फासं एऊ ॥ १४ ॥ गाहाण रसा जुवईण विब्भमा कविअणस्स वयणाइं ।
णुत्ताराई ॥ १५ ॥

क्रियासंबन्धिसूक्तानि ५०

उपदेष्टुं च वक्तुं च, जनः सर्वोऽपि पण्डितः । तदनुष्ठानकर्तृत्वे, मुनयोऽपि न पण्डिताः ॥ १ ॥ पठकः पाठकश्चैव,
ये चान्ये शास्त्रचिन्तकाः । सर्वे व्यसनिनो ज्ञेया, यः क्रियावान् स पण्डितः ॥ २ ॥ अधीत्य शास्त्राणि भवन्ति मूर्खा,
यस्तु क्रियावान् पुरुषः स विद्वान् । संचिन्त्यतामौषधमातुरं हि, न ज्ञानमात्रेण करोत्यरोगम् ॥ ३ ॥ केचित्काव्यकला-
कलापकुशलाः केचिच्च सल्लक्षणाः, केचित्तर्कवितर्कतत्त्वनिपुणाः केचिच्च सैद्धांतिकाः । केचिन्निस्तुषबीजशास्त्रनिरता
ज्योतिर्विदो भूरयश्चारित्रैकविलासवासभवनाः स्वल्पाः पुनः सूरयः ॥ ४ ॥ कृते युगसहस्रेण, त्रेतायां हायनेन च । द्वापरे
यच्च मासेन, अहोरात्रेण तत्कलौ ॥ ५ ॥

विनयसूक्तानि ५१

विनयं राजपुत्रेभ्यः, पण्डितेभ्यः सुभाषितम् । अनृतं द्यूतकारेभ्यः, स्त्रीभ्यः शिक्षेत कैतवम् ॥ १ ॥ जितेन्द्रियत्वं
विनयस्य कारणं, गुणप्रकर्षो विनयादवाप्यते । गुणाधिके पुंसि जनोऽनुरज्यते, जनानुरागप्रभवा हि संपदः ॥ २ ॥

केनाञ्जितानि नयनानि मृगाङ्गनानां, को वा करोति रुचिराङ्गरुहान्मयूरान्? । कश्चोत्पलेषु दलसंचयमातनोति ?, को वा करोति विनयं कुलजेषु पुंसु ? ॥ ३ ॥ विणए सिस्सपरिक्खा सुहडपरिक्खा य होइ संगामे । वसणे मित्तपरिक्खा दाणपरिक्खा य दुकाले ॥ ४ ॥

## बुद्धिसंबन्धिसूक्तानि ५२

षट्पदः पुष्पमध्यस्थं, यथा सारं समुद्धरेत् । तथा सर्वेषु कार्येषु, सारं गृह्णाति बुद्धिमान् ॥ १ ॥ एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता । बुद्धिर्बुद्धिमता मुक्ता, राष्ट्रं हन्यात्सराजकम् ॥ २ ॥ श्रियं प्रसूते विपदं रुणद्धि, श्रेयांसि सूते मलिनं प्रमार्ष्टि । संस्कारयोगाच्च परं पुनीते, शुद्धा हि बुद्धिः किल कामधेनुः ॥ ३ ॥ वयोऽनुरूपाः प्रायेण, प्राणिनां हृदि बुद्धयः । रसालस्य कषायाम्लमधुराः क्रमशो रसाः ॥ ४ ॥ उत्पन्नपरितापस्य, बुद्धिर्भवति यादृशी । तादृशी यदि पूर्वं स्यात्कस्य स्यान्न समीहितम् ? ॥ ५ ॥ दैवं रुष्टं चपेटां किं, विश्राणयति जातुचित्? । किं तु तां दुर्मतिं दत्ते, यया रुलति रङ्कवत् ॥ ६ ॥

## मिथ्यात्वसंबन्धिसूक्तानि ५३

मिथ्यात्वं परमो रोगो, मिथ्यात्वं परमं विषम् । मिथ्यात्वं परमः शत्रुर्मिथ्यात्वं परमं तमः ॥ १ ॥ अभालस्य भाले कथं पट्टबन्धः ?, अकर्णे अनेत्रे कथं गीतनृत्ये ? । अकण्ठस्य कण्ठे कथं पुष्पमाला ?, अपादस्य पादे कथं मे प्रणामः ? ॥ २ ॥

१ विनये शिष्यपरीक्षा सुभटपरीक्षा च भवति सङ्ग्रामे । व्यसने मित्रपरीक्षा दानपरीक्षा च दुष्काले ॥ ४ ॥

५० क्रियायां ५
५१ विनये ४
५२ बुद्धौ ६
५३ मिथ्यात्वे २२

मूढदृष्टिरिति ब्रूते, युक्तायुक्तविवेचकः ॥ ३ ॥ वधो धर्मो जलं तीर्थं, देवो रागी यतिः सस्त्री, धर्मः प्राणिनिशुम्भनम् । मूढदृष्टिरिति ब्रूते, युक्तायुक्तविवेचकः ॥ ३ ॥ वधो धर्मो जलं तीर्थं, गौर्नमस्या गुरुर्गृही । अग्निर्देवो द्विजः पात्रं, येषां तैः कोऽस्तु संस्तवः? ॥ ४ ॥ जन्मन्येकत्र दुःखाय, रोगो ध्वान्तं रिपु-
र्विषम् । अपि जन्मसहस्रेषु, मिथ्यात्वमचिकित्सितम् ॥ ५ ॥ न सर्वज्ञा न नीरागाः, शङ्करब्रह्मविष्णवः । प्राकृतेभ्यो
मनुष्येभ्योऽप्यसमंजसवृत्तयः ॥ ६ ॥ स्त्रीसङ्गः काममाचष्टे, द्वेषं चाऽऽयुधसंग्रहः । व्यामोहं चाक्षसूत्रादिरशौचं च कम-
ण्डलुः ॥ ७ ॥ गौरी रुद्रस्य सावित्री, ब्रह्मणः श्रीर्मुरद्विषः । शचीन्द्रस्य रवेरन्नादेवी दक्षात्मजा विधोः ॥ ८ ॥ तारा बृह-
स्पतेः स्वाहा, वह्नेश्चेतोभुवो रतिः । धूमोर्णा श्राद्धदेवस्य, दारा एवं दिवौकसाम् ॥९॥ मुशलोदूखले चुल्ली, देहली पिप्पलो
जलम् । निम्बोऽर्कश्चापि यैः प्रोक्ता, देवास्तैः केऽत्र वर्जिताः? ॥ १० ॥ यादृशो जायते देवस्तादृशी धूपवेलिका । ईशस्य
यादृशी मूर्त्तिः, प्रणामस्तादृगेव हि ॥ ११ ॥ आलमालेश्वरो देव, आलमालेन पूज्यते । आलमालस्य धर्मस्य, आलमालं
फलं भवेत् ॥ १२ ॥ न मांसभक्षणे दोषो, न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां, निवृत्तिस्तु महाफला ॥ १३ ॥
प्रियादर्शनमेवास्तु, किमन्यैर्दर्शनान्तरैः । प्राप्यते यत्र निर्वाणं, सरागेणापि चेतसा ॥ १४ ॥ एतस्याः कुक्षिकोणे विद-
धति वसतिं कोटयः स्वर्गधाम्नामेतल्लाङ्गूललग्नाः सपदि तनुभृतो वैतरिण्यास्तरन्ति । गामित्थं स्तौति विप्रः पथि पथि न
वयं कारणं तत्र विद्मो, गृह्णन्तीमात्मगेहात्तृणमपि निविडं ताडयन्त्युग्रदण्डैः ॥ १५ ॥ अमेध्यमश्नाति विवेकशून्या,
स्वनन्दनं कामयतेऽतिसक्ता । खुराग्रशृङ्गैर्विनिहन्ति जन्तून्, गौर्वन्द्यते केन गुणेन? राजन्! ॥ १६ ॥ पयःप्रदानसाम-
र्थ्याद्वन्द्या चेन्महिषी न किम्? । विशेषो दृश्यते नास्या, महिषीतो मनागपि ॥ १७ ॥ स्थानं तीर्थर्षिदेवानां, 'सर्वेषामपि

गौर्यदि। विक्रीयते दुह्यते च, हन्यते च ततः कथम्? ॥ १८ ॥ स्पर्शोऽमेध्यभुजां गवामघहरो वन्द्या विसंज्ञा द्रुमाः, स्वर्गश्छागवधाद्धिनोति च पितॄन् विप्रोपभुक्ताशनं। आप्तच्छद्मपराः सुराः शिखिहुतं प्रीणाति देवान् हविः, स्फीतं फल्गु च वल्गु च श्रुतिगिरां को वेत्ति लीलायितम्? ॥ १९ ॥ एषा तटाकमिषतो वरदानशाला, मत्स्यादयो रसवती प्रगुणा सदैव। पात्राणि यत्र बकसारसचक्रवाकाः, पुण्यं कियद्भवति तत्तु वयं न विद्मः ॥ २० ॥ किं नन्दी किं मुरारिः किमु रतिरमणः किं नलः किं कुवेरः, किं वा विद्याधरोऽसौ किमिह सुरपतिः किं विधुः किं विधाता? । नायं नायं न चायं न खलु न हि न वा नापि चासौ न चैषः, क्रीडां कर्तुं प्रवृत्तः स्वयमिति च हले! भूपतिर्भोजदेवः ॥ २१ ॥ सत्यं वप्रेषु शीतं शशिकरधवलं वारि पीत्वा प्रकामं, व्युच्छिन्नाशेषतृष्णाः प्रमुदितमनसः प्राणिसार्था भवन्ति। शोषं नीते जलौघे दिनकरकिरणैर्यान्त्यनन्ता विनाशं, तेनोदासीनभावं व्रजति मुनिगणः कूपवप्रादिकार्ये ॥ २२ ॥

## यज्ञसंवन्धिसूक्तानि ५४

कर्माणि समिधः क्रोधादयस्तु पशवो मताः। सत्यं यूपं समप्राणिरक्षणं दक्षिणा पुनः ॥१॥ इंद्रियाणि पशून् कृत्वा, वेदीं कृत्वा तपोमयीम्। अहिंसामाहुतिं कृत्वा, आत्मयज्ञं यजाम्यहम् ॥२॥ अन्धे तमसि मज्जामः, पशुभिर्ये यजामहे। हिंसानाम भवेद्धर्मो, न भूतो न भविष्यति ॥ ३ ॥ (श्रीभोजपृष्टो धनपाल आह) नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया, संतुष्टस्तृणभक्षणेन सततं साधो! न युक्तं तव। स्वर्गं यान्ति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो, यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बान्धवैः? ॥ ४ ॥ 'किमेतदिति पृष्ट आह'—यूपं छित्त्वा पशून् हत्वा, कृत्वा रुधिरकर्दमम्।

५३ नि-
श्यात्वे २२
५४ यज्ञे ७

यद्येवं गम्यते स्वर्गो, नरके केन गम्यते? ॥ ५ ॥ सत्यं यूपं तपो ह्यग्निः, प्राणाः समिधयो मताः । अहिंसामाहुतिं दद्यादेष यज्ञः सनातनः ॥ ६ ॥ इत्यादि, 'शुकसंवादोक्तं प्राह'—तपोऽग्नौ जीवकुण्डस्थे, दममारुतदीपिते । असत्कर्मसमित्क्षेपैरग्निहोत्रं कुरूत्तम! ॥ ७ ॥

## श्रीसम्यक्त्वसंबन्धिसूक्तानि ५५

मूलं बोधिद्रुमस्यैतद्, द्वारं पुण्यपुरस्य च । पीठं निर्वाणहर्म्यस्य, निधानं सर्वसंपदाम् ॥ १ ॥ गुणानामेक आधारो, रत्नानामिव सागरः । पात्रं चारित्रवित्तस्य, सम्यक्त्वं श्लाघ्यते न कैः? ॥ २ ॥ मोत्तूण जिणं मोत्तूण जिणमयं जिणमयट्ठिए मोत्तुं । संसारकच्चवारं चिंतिज्जंतं जगं सेसं ॥ ३ ॥ मिच्छत्तं उच्छिदिअ संमत्तं जो ठवेइ निअवंसे । तेण सयलोवि वंसो सिद्धिपुरीसंमुहो ठविओ ॥ ४ ॥ तेलुकस्स पहुत्तं लद्धूणवि परिवडंति कालेणं । संमत्ते पुण लद्धे अक्खयसुक्खं लहइ मुक्खं ॥ ५ ॥ धनेन हीनोऽपि धनी मनुष्यो, यस्यास्ति सम्यक्त्वधनं प्रधानम् । धनं भवेदेकभवे सुखाय, भवे भवेऽनन्तसुखी सुदृष्टिः ॥ ६ ॥ दानानि शीलानि तपांसि पूजा, सत्तीर्थयात्रा प्रवरा दया च । सुश्रावकत्वं व्रतपालनं च, सम्यक्त्वपूर्वाणि महाफलानि ॥ ७ ॥ सम्यक्त्वरत्नान्न परं हि रत्नं, सम्यक्त्वमित्रान्न परं हि मित्रम् । सम्यक्त्वबन्धोर्न परो हि बन्धुः, सम्यक्त्वलाभान्न परो हि लाभः ॥ ८ ॥ अतुलसुखनिधानं सर्वकल्याणबीजं,

१ मुक्त्वा जिनं मुक्त्वा जिनमतं जिनमतस्थिताम् मुक्त्वा । संसारापस्करः चिन्त्यमानं जगत् शेषं ॥३॥ मिथ्यात्वमुच्छिद्य सम्यक्त्वं यः स्थापयति निजवंशे तेन सकलोऽपि वंशः सिद्धिपुरीसम्मुखः स्थापितः ॥४॥ त्रैलोक्यस्य प्रभुत्वं लब्ध्वाऽपि परिपतन्ति कालेन । सम्यक्त्वे पुनर्लब्धेऽक्षयसौख्यं लभते मोक्षम् ॥५॥

जननजलधिपोतं भव्यसत्त्वैकचिह्नम् । दुरिततरुकुठारं पुण्यतीर्थं प्रधानं, पिबत जितविपक्षं दर्शनाख्यं सुधाम्बु ॥ ९ ॥ यद्देवैरपि दुर्लभं च घटते येनोच्चयः श्रेयसां, यन्मूलं जिनशासने सुकृतिनां यज्जीवितं शाश्वतम् । तत्सम्यक्त्वमवाप्य पूर्वपुरुषश्रीकामदेवादिवद्दीर्घायुः सुरमाननीयमहिमा श्राद्धो महर्द्धिर्भव ॥ १० ॥ श्रीमत्कृष्णनरेन्द्रसत्यकिनृपश्रीश्रेणिकाद्याः पुरा, श्रूयन्ते जिनशासने शुचितमाः सम्यक्त्वतः केवलात् । तीर्थाधीशपदोदयप्रतिभुवं संप्राप्तवन्तः शुभं, तस्मात्तत्र पवित्रचित्रसुकृते शुद्धिर्विधेया बुधैः ॥ ११ ॥ कन्थाऽऽचार्याघना ते ननु शफरवधे जालमश्नासि मत्स्यांस्तेमे मद्योपदंशान् पिबसि ननु युतो वेश्यया यासि वेश्याम्? । कृत्वाऽरीणां गलेंऽह्री क नु तव रिपवो? येषु सन्धिं छिनद्मि, चौरस्त्वं? द्यूतहेतोः कितव इति कथं? येन दासीसुतोऽसि ॥ १२ ॥ त्रैकाल्यं द्रव्यषट्कं नवपदसहितं जीवषट्कायलेश्याः, पञ्चाप्येवास्तिकाया व्रतसमितिगतिज्ञानचारित्रभेदाः । इत्येतन्मोक्षमूलं त्रिभुवनमहितैः प्रोक्तमर्हद्भिरीशैः, प्रत्येति श्रद्धाति स्पृशति च मतिमान् यः स वै शुद्धदृष्टिः ॥ १३ ॥ असमीक्ष्य तदादि दुर्घटं, जगतो जन्मविनाशकारणम् । न कदाचिदनीदृशं जगत्, कथितं तत्त्वरहस्यवेदिभिः ॥ १४ ॥ आदर्शप्रतिबिम्बिते स्ववदने सर्वोऽपि योषिज्जनो, वामां दक्षिणतः कपोलफलके पत्रावलीं पश्यति । ज्ञानं सांशयिकं मनागपि न तर्कितूक्ततत्त्वार्थया, युक्त्या यन्न घटामुपैति तदहं दृष्टाऽपि न श्रद्दधे ॥ १५ ॥ आरंभे नत्थि दया महिलासंगेण नासए बंभं । संकाए सम्मत्तं पव्वज्जा अत्थगहणेण ॥ १६ ॥ जं सक्कइ तं कीरइ जं च न सक्कइ तयंमि सद्दहणा । सद्दहमाणो जीवो वच्चइ अयरामरं ठाणं ॥ १७ ॥

१ आरम्भे नास्ति दया महिलासङ्गेन नश्यति ब्रह्म । शङ्कया सम्यक्त्वं प्रव्रज्या अर्थग्रहणेन ॥ १६ ॥ यच्छक्यते तत्क्रियते यन्न शक्यते तस्मिन् श्रद्धानम् । श्रद्दधन् जीवो व्रजत्यजरामरं स्थानम् ॥ १७ ॥

## वणिक्संवन्धिसूक्तानि ५६

यो न निर्गत्य निःशेपामालोकयति मेदिनीं । अनेकाश्चर्यसंपूर्णां, स नरः कूपदर्दुरः ॥ १ ॥ दीसइ विविहच्छरिअं जाणिज्जइ सुअणदुज्जणविसेसो । अप्पाणं च कलिज्जइ हिंडिज्जइ तेण पुहवीए ॥ २ ॥ अपलपति रहसि दत्तं, प्रत्ययदत्तेऽपि संशयं कुरुते । क्रयविक्रये च लुण्टति, तथापि लोके वणिक् साधुः ॥ ३ ॥ मानेन किञ्चित्तुलयाऽपि किञ्चिद्दानेन किञ्चिद्ग्रहणेन किञ्चित् । किञ्चिच्च किञ्चिच्च समाहरन्तः, प्रत्यक्षचौरा वणिजो भवन्ति ॥ ४ ॥ श्रुत्वा दुर्वाक्यमुच्चैर्हसति सुपति च स्वीयमाप्येन लोकं, ह्यर्धं गृह्णाति पण्यं वहु किमिति वदन्नर्द्धमेव प्रदत्ते । स्वीयान्यायेऽपि पूर्वं व्रजति नृपगृहं लेखके कूटकारी, मध्ये सिंहप्रतापः प्रकटमृगमुखः स्याद्वणिग् धूर्त्तराजः ॥ ५ ॥

## श्राद्धसंवन्धिसूक्तानि ५७

यत्र विद्यागमो नास्ति, यत्र नास्ति धनागमः । यत्र ग्रामे सुखं नास्ति, न तत्र दिवसं वसेत् ॥ १ ॥ तत्र धाम्नि वसेद्गृहमेधी, संपतन्ति खलु यत्र मुनीन्द्राः । यत्र चैत्यगृहमस्ति जिनानां, श्रावकाः परिवसन्ति च यत्र ॥ २ ॥ सलिलमपि सदाऽसौ मात्रया वस्त्रपूतं, यदपि गृहमुपेतं दारुधान्यादि किञ्चित् । नयति तदुपयोगं प्रत्युपेक्षादिशुद्धं, स्पृशति गृहिणमेवं नाधिकः कर्मवन्धः ॥ ३ ॥ कुंडनी-पेपेणी-चुल्ली-जलकुंभ-प्रमार्जनी । पंच सूना गृहस्थस्य, वध्यते यासु वाहयन्

---

१ दृश्यंते विविधान्याश्चर्याणि, ज्ञायते सज्जनदुर्जनविशेपः । आत्मा च कल्यते, हिण्ड्यते तेन पृथ्व्याम् ॥ २ ॥

॥ ४ ॥ अयशः प्राप्यते येन, येन चाधोगतिर्भवेत् । स्वार्थाच्च भ्रश्यते येन, न तत्कर्म समाचरेत् ॥ ५ ॥ महुमज्जमंसभेसज्ज–मूलसत्थग्गिजंतमंताइ । न कयावि हु कायव्वं सड्ढेहिवि पावभीरुहिं ॥ ६ ॥ जिणपूआ मुणिदाणं इत्तिअमित्तं गिहीण सच्चरिअं । जइ एयाओ भट्ठो तो भट्ठो सयलसुक्खाणं ॥ ७ ॥ श्रद्धालुतां श्राति जिनेन्द्रशासने, धनानि क्षेत्रेषु वपत्यनारतम् । करोति पुण्यानि सुसाधुसेवनादतोऽपि तं श्रावकमाहुरुत्तमाः ॥ ८ ॥ पांचें चूक्यो त्रिहुं मूकिओ, चिउहुं न जाणइ नामुं । जगि ढंढेरओ वाइओ मुंहइ श्रावक नामुं ॥ ९ ॥ स्थाने निर्वासः सकलं कलत्रं, पुत्रः पवित्रः स्वजनानुरागः । न्यायात्तवित्तं स्वहितं च चित्तं, निर्दंभधर्मस्य सुखानि सप्त ॥ १० ॥ अक्षुद्रो रूपसौम्यो विनयनययुतः क्रूरताशाठ्यमुक्तो, मध्यस्थो दीर्घदर्शी परहितनिरतो लब्धलक्षः कृतज्ञः । सद्दाक्षिण्यो विशेषी सदयगुणरुचिः सत्कथः पक्षयुक्तो, वृद्धार्हो लज्जितो यः शुभजनदयितो धर्मरत्नस्य योग्यः ॥ ११ ॥ जिनशासनावतंसाः शङ्खाद्याः श्रावकाः पुरा जाताः । अधिगम्य देशविरतिं सन्तु भवन्तोऽपि तादृक्षाः ॥ १२ ॥ चिंतइ जइकज्जाइं न दिट्ठखलिओवि होइ निन्नेहो । एगंतवच्छलो जइजणस्स जणणीसमो सड्ढो ॥ १३ ॥ हिअए ससिणेहोवि अ मुणीण मंदायरो विणयकम्मे । भाइसमो साहूणं पराभवे होइ ससहाओ ॥ १४ ॥ मित्तसमाणो माणा ईसिं रूसइ अपुच्छिओ कज्जे । मन्नंतो अप्पाणं

---

१ मधुमद्यमांसभेषजमूलशस्त्राग्नियन्त्रमन्त्रादि । न कदाचिदपि कर्त्तव्यं, श्राद्धैरपि पापभीरुभिः ॥ ६ ॥ जिनपूजा मुनिदानमेतावन्मात्रं गृहिणां सच्चरित्रं । यद्येतस्माद्भ्रष्टो भ्रष्टः स सकलसौख्येभ्यः ॥ ७ ॥ २ चिन्तयति यतिकार्याणि न दृष्टस्खलितोऽपि भवति निःस्नेहः । एकान्तवत्सलो यतिजनस्य जननीसमः श्राद्धः ॥ १३ ॥ हृदये सस्नेहोऽपि च मुनीनां मन्दादरो विनयकर्मणि । भ्रातृसमः साधूनां पराभवे भवति ससहायः ॥ १४ ॥ मित्रसमानो मानात्

मुणीण सयणाउ अब्भहिअं ॥ १५ ॥ थद्धो छिद्दप्पेही पमायखलिआइं निच्चमुच्चरए । सड्ढो सवक्किकप्पो साहुजणं तणसमं गणइ ॥ १६ ॥ गुरुभणिओ सुत्तत्थो विंचिज्जइ अवितहो मणे जस्स । सो आयंससमाणो सुसावओ देसिओ समए ॥ १७ ॥ पवणेण पडागा इव भामिज्जइ जो जणेण मूढेण । अविणिच्छिअगुरुवयणो सो भवइ पडाइआतुल्लो ॥ १८ ॥ पडिवन्नमसग्गाहं न मुअइ गीअत्थसमणुसिट्ठोवि । थाणुसमाणो एसो अपओसी मुणिजणे नवरं ॥ १९ ॥ उम्मग्गदेसओ निह्नवोऽसि मूढोऽसि मंदधम्मोऽसि । इअ संमंपि कहंतो खरंटए सो खरंटसमो ॥ २० ॥ इति श्रीस्थानाङ्गोक्तं श्राद्धगणाष्टकम् ॥

## चारित्रसंबन्धिसूक्तानि ५८

तच्चारित्रं न किं सेवे, यत्सेवावशगः पुमान् । हीनवंशोऽपि संसेव्यः, सुरासुरनरोत्तमैः ॥ १ ॥ अकुलीनः कुलीनः स्यात्सदाचारधुरन्धरः । अविशुद्धैकपक्षोऽपि, दर्पणो वृत्तनिर्मलः ॥ २ ॥ अपवित्रः पवित्रः स्याद्दासो विश्वेशतां भजेत् । मूर्खो लभेत ज्ञानानि, मङ्क्षु दीक्षाप्रसादतः ॥ ३ ॥ दीक्षोल्बणगुणग्रामक्रियालीनस्य देहिनः । जायन्ते

---

ईर्ष्यदुष्यति अष्टः कार्ये । मन्यमान आत्मानं मुनीनां स्वजनादभ्यधिकम् ॥ १५ ॥ स्तब्धः छिद्रप्रेक्षी प्रमादस्खलितानि नित्यमुच्चरति । श्राद्धः सपत्नीकल्पः साधुजनं तृणसमं गणयति ॥१६॥ गुरुभणितौ सूत्रार्थौ विक्ष्येते अवितथौ मनसि यस्य । स आदर्शसमानः सुश्रावकः देशितः समये ॥१७॥ पवनेन पताकेव भ्राम्यते यो जनेन मूढेन । अविनिश्चितगुरुवचनः स भवति पताकातुल्यः ॥ १८ ॥ प्रतिपन्नमसद्ग्राहं न मुञ्चति गीतार्थसमनुशिष्टोऽपि । स्थाणुसमान एषोऽप्रद्वेषी मुनिजने परम् ॥ १९ ॥ उन्मार्गदेशको निह्नवोऽसि मूढोऽसि मन्दधर्मोऽसि । इति सम्यगपि कथयन्तं खरण्टयति स खरण्टसमः ॥ २० ॥

त्रिजगत्सम्पदब्धयः सर्वलब्धयः ॥ ४ ॥ दत्ते महत्त्वं ऋद्ध्यादि, जनस्य ननु जीवतः । महानन्दपदं नित्यं, दत्ते दीक्षा परत्र च ॥ ५ ॥ कर्माहिकीलनीमन्त्रः, संवेगरसकूपिका । निर्वाणभूभृदास्थानी, तपस्या पारमेश्वरी ॥ ६ ॥ कश्चिन्नृजन्मप्रासादे, धर्मस्थपतिनिर्मिते । सद्गुणं विशदं दीक्षाध्वजं धन्योऽधिरोपयेत् ॥ ७ ॥ तद्दुःखमपि नो दुःखं, निर्वाहो यत्र सुन्दरः । वन्धः शस्यः सुमनसां, नृपामरशिरःस्थितौ ॥ ८ ॥ नो दुष्कर्मप्रयासो न कुयुवतिसुतस्वामिदुर्वाक्यदुःखं, राजादौ न प्रणामोऽशनवसनधनस्थानचिन्ता न चैव । ज्ञानाप्तिर्लोकपूजा प्रशमसुखरतिः प्रेत्य मोक्षाद्यवाप्तिः, श्रामण्येऽमी गुणाः स्युस्तदिह सुमतयस्तत्र यत्नं कुरुध्वम् ॥ ९ ॥ मिथ्या वक्तुं न हि जानामि, सारं किञ्चित्तव कथयामि । गुप्तित्रितयं समितीः पञ्च, यावज्जीवं खलु मा मुञ्च ॥ १० ॥ पञ्चाश्रवाद्विरमणं पञ्चेन्द्रियनिग्रहः कषायजयः । दण्डत्रयविरतिश्चेति संयमः सप्तदशभेदः ॥ ११ ॥ जस्स कए[1] आहारो पाणिवहो तस्स होइ निअमेण । पाणिवहे वयभंगो वयभंगे दुग्गई चेव ॥ १२ ॥ समविसमंपि पढंता विरया पावेसु सग्गइं जंति । सुट्ठुविअ सुक्कपाढा दुस्सीला दुग्गइं जंति ॥ १३ ॥ केस म लोचउ अप्पणा, केसहिं किओ क दोसु ? । तं मणु लुंचउ अप्पणुं, जं जगि भमइ सरोसु ॥ १४ ॥ जयणा[2] य धम्मजणणी जयणा धम्मस्स पालणी होइ । तव्वुड्ढीकरी जयणा एगंतसुहावहा जयणा ॥ १५ ॥ जयणाइ

---

1 यस्य कृते आहारः प्राणिवधस्तस्य भवति नियमेन । प्राणिवधे व्रतभङ्गो व्रतभङ्गे दुर्गतिरेव ॥ १२ ॥ समविषममपि पठन्तो विरताः पापेभ्यः सुगतिं यान्ति । सुष्ठ्वपि च शुष्कपाठाः दुश्शीला दुर्गतिं यान्ति ॥ १३ ॥ 2 यतना च धर्मजननी यतना धर्मस्य पालनी भवति । तद्वृद्धिकरी यतना एकान्तसुखावहा यतना ॥ १५ ॥ यतनायां वर्तमानो जीवः सम्यक्त्वज्ञानचरणानाम् । श्रद्धाबोधनसेवनाभावेनाराधको भवति ॥ १६ ॥

वट्टमाणो जीवो सम्मत्तनाणचरणाणं । सद्धाबोहणसेवणभावेणाराहओ होइ ॥ १६ ॥ पल्ले महइमहल्ले कुंभं पक्खिवइ सोहए नालिं । अस्संजए अविरए बहु बंधइ निज्जरइ थोवं ॥ १७ ॥ पल्ले महइमहल्ले कुंभं सोहेइ पक्खिवे नालिं । जे संजए पमत्ते बहु निज्जरइ बंधए थोवं ॥ १८ ॥ पल्ले महइमहल्ले कुंभं सोहेइ पक्खिवे न किंचि । जे संजएऽपमत्ते बहु निज्जरइ बंधइ न किंचि ॥ १९ ॥ भयवं ! के जीवा सोअणीआ भवंति ? गोयमा ! अपाविअजिणदिक्खाउ असुअसिद्धंतवयणाउ अबोहिअलोआउ अकयधम्माउ अग्गहिअअणुव्वयाउ अट्ठमयपंचपमायचउक्कसायसंजुत्ताउ अखामियसव्वजीवाउ अणालोइअसव्वपावाउ जे जीवा परलोअं गच्छंति ते सोअणीआ हवंति, जओ अणंते संसारे सयलदुहनिहाणे निच्चं दुहं अणुहवंता चिट्ठंति १ ॥ भयवं ! के जीवा सोअणीया न हवंति ?, गोयमा ! जे उण गहिअदिक्खाउ पढिअसिद्धंतवयणाउ कयसुकयाउ अंगीकयअणुव्वयाउ कयसाहम्मिअवच्छलाउ दिन्नदाणाउ नाण-

१ पल्येऽतिमहति कुम्भं प्रक्षिपति शोधयति नालीम् । असंयतोऽविरतो बहु बध्नाति निर्जरयति स्तोकम् ॥ १७ ॥ पल्येऽतिमहति कुम्भं शोधयति प्रक्षिपति नालीम् । यः संयतः प्रमत्तः बहु निर्जरयति बध्नाति स्तोकम् ॥ १८ ॥ पल्येऽतिमहति कुम्भं शोधयति प्रक्षिपति न किञ्चित् । यः संयतोऽप्रमत्तः बहु निर्जरयति बध्नाति न किञ्चित् ॥ १९ ॥ २ भगवन् ! के जीवाः शोचनीया भवन्ति ?, गौतम ! अप्राप्तजिनदीक्षास्तु अश्रुतसिद्धान्तवचना अबोधितलोका अकृतधर्माणः अगृहीताणुव्रता अष्टमदपञ्चप्रमादचतुष्कषायसंयुक्ता अक्षमितसर्वजीवा अनालोचितसर्वपापा ये जीवाः परलोकं गच्छन्ति ते शोचनीया भवन्ति, यतोऽनन्ते संसारे सकलदुःखनिधाने नित्यं दुःखमनुभवन्तस्तिष्ठन्ति १ । भगवन् ! के जीवाः शोचनीया न भवन्ति ?, गौतम ! ये पुनः गृहीतदीक्षाः पठितसिद्धान्तवचनाः कृतसुकृता अङ्गीकृताणुव्रताः कृतसाधर्मिकवात्सल्याः दत्तदाना ज्ञानपाठकृतसाहाय्याः शुभभावनायुता लेखितजिनवचनाः क्षमितसर्वजीवा आलोचितसर्वपापा ये जीवाः परलोकं गच्छन्ति ते शोचनीया न भवन्ति, यतः शीघ्रमेव स्वर्गं मोक्षं वा गच्छन्ति ।

पढंतकयसाहिज्जाउ सुहभावणाजुत्ताउ लेहिअजिणवयणाउ खामियसव्वजीवाउ आलोइअसव्वपावाउ जे जीवा परलोअं जंति ते सोअणीआ न हवंति, जओ सिग्घमेव सग्गं मुक्खं वा गच्छंति २ ॥ कषाया यस्य नो छिन्ना, यस्य नात्मवशं मनः । इन्द्रियाणि न गुप्तानि, प्रव्रज्या तस्य निष्फला ॥ २० ॥ यः पालयित्वा चरणं विशुद्धं, करोति भोगादिनिदानमज्ञः । ही वर्द्धयित्वा फलदानदक्षं, स नन्दनं भस्मयते वराकः ॥ २१ ॥

## साधुसंबन्धिसूक्तानि ५९

उच्चैरध्ययनं चिरन्तनकथा स्त्रीभिः सहालापनं, तासामर्भकलालनं पतिनुतिस्तद्दानमिथ्यास्तुतिः । आदेशश्च करावलोकनमथो पाण्डित्यलेशः क्वचित्, होरांगारुडमन्त्रवादविधयो भिक्षोर्गुणा द्वादश ॥ १ ॥ दो तुंवडाइ हत्थे वयणे धम्मक्खराणि चत्तारि । विउलं च भरहवासं को अम्ह पहुत्तणं हरइ? ॥ २ ॥ सकलकुशलवल्लीपुष्करावर्त्तमेघो, दुरिततिमिरभानुः कल्पवृक्षोपमानः । भवजलनिधिपोतः सर्वसंपत्तिहेतुः, स भवतु सततं वः श्रेयसे धर्मलाभः ॥ ३ ॥ अमरनरेसरसुक्खं कमेण पावंति मुक्खसुक्खंपि । सो तुज्झ नरवरेसर ! होउ सया धम्मलाभुत्ति ॥ ४ ॥[1] भूपर्यङ्के निजभुजलतादन्दुकं खं वितानं, दीपश्चन्द्रः स्वरतिवनितालब्धमोदप्रसङ्गः । दिक्कन्याभिः पवनचमरैर्वीज्यमानोऽनुकूलं, भिक्षुः शेते नृप इव ननु त्यक्तसर्वक्षणोऽपि ॥ ५ ॥ न च राजभयं न च चौरभयं, इहलोकसुखं परलोकहितम् । वरकीर्त्तिकरं

[1] अमरनरेश्वरसौख्यं क्रमेण प्रापयति मोक्षसौख्यमपि । स तुभ्यं नरवरेश्वर ! भवतु सदा धर्मलाभ इति ॥ ४ ॥

नरदेवनतं, श्रमणत्वमिदं रमणीयतरम् ॥ ६ ॥ महीशय्या शय्या विपुलमुपधानं भुजलता, वितानं चाकाशं व्यजनमनु-
कूलोऽयमनिलः । स्फुरद्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः, सुखं शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥ ७ ॥ विवसाडा
सवि जोइआ, भिक्खसमो नवि कोइ । देउल वेठां जोइये, ज्यां रांधे सहु कोइ ॥ ८ ॥ प्रतिदिनमयत्नलभ्ये भिक्षुकज-
नजननि! साधुकल्पलते!। नृपनमनि! नरकतारिणि! भगवति! भिक्षे! नमस्तुभ्यम् ॥ ९ ॥ क्षितितलशयनं वा प्रान्त-
भैक्षाशनं वा, सहजपरिभवो वा नीचदुर्भाषितं वा । महति फलविशेषे नित्यमभ्युदितानां, न मनसि न शरीरे दुःखमु-
त्पादयन्ति ॥ १० ॥ गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य, ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य । किं तैर्भाव्यं
मम सुदिवसैर्यत्र ते निर्विशङ्काः, कंडूयन्ते जरठहरिणाः शृङ्गमङ्गे मदीये ॥ ११ ॥ चण्डालः किमयं द्विजातिरथवा शूद्रो-
ऽथ किं तापसः, किं वा तत्त्वनिविष्टनिर्मलमतिर्योगीश्वरः कोऽपि किम्? । इत्युत्पन्नविकल्पजल्पमुखरैः सम्भाव्यमाना
जनैर्न क्रुद्धाः पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः ॥ १२ ॥ अहौ वा हारे वा कुसुमशयने वा दृषदि वा, मणौ
वा लोष्टे वा बलवति रिपौ वा सुहृदि वा । तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः, क्वचित्पुण्यारण्ये शिव शिव
शिवेति प्रलपतः ॥ १३ ॥ एकाकी निःस्पृहः शान्तः, पाणिपात्रो दिगम्बरः । कदा शम्भो! भविष्यामि, कर्मनिर्मूलनक्षमः
॥ १४ ॥ न नटा न विटा न गायना, न परद्रोहनिबद्धबुद्धयः । नृपसद्मनि नाम के वयं?, कुचभारावनता न योषितः
॥ १५ ॥ शमसुखशीलितमनसामशनमपि द्वेषमेति किमु कामाः । स्थलमपि दहति झषाणां किमङ्ग पुनरुज्ज्वलो वह्निः ?

॥ १६ ॥ खंतस्स दंतस्स जिइंदिअस्स, अज्झप्पजोगे गयमाणसस्स । किं मज्झ एएण विचिंतिएणं, सकुंडलं वा वयणं न वत्ति ?॥ १७ ॥ खंतस्स दंतस्स जिइंदिअस्स, अज्झप्पजोगे गयमाणसस्स । पुरो भमंतीइवि अंगणाए ( णेव णायं ), सकुंडलं वा वयणं न वत्ति ॥ १८ ॥ चित्तं च उड्ढं घणमंडलंमि, विखित्तचित्तेण मए न नायं । पुरो भमंतीइवि अंगणाए, सकज्जलं वा नयणं न वत्ति ॥ १९ ॥

## वास्तुविद्यासंबन्धिसूक्तानि ६०

शाला तु ब्रह्मशाला स्यात्ताला तु जिनमन्दिरम् । श्वेताम्बरोपदेशेन, श्रावकैस्तद्विधीयते ॥ १ ॥ गौरी प्राह—कीदृशाश्च किमाहाराः, कर्म कुर्वन्ति कीदृशम्? । अवतारः कथं तेषां, महादेव! निगद्यताम् ॥ २ ॥ ईशः प्राह—तपःशोषितसर्वाङ्गा, मलक्लिन्नकलेवराः । स्नसाऽस्थिचर्मवपुषो, निहतान्तरशत्रवः ॥ ३ ॥ तुम्बीफलकरा भिक्षाभोजिनः श्वेतवाससः । सकम्बला रोमयुता, ऊर्णारोमप्रमार्जिनः ॥ ४ ॥ गृह्णन्ति शुद्धमाहारं, शास्त्रदृष्ट्या चरन्ति च । न कुर्वन्ति सदा कोपं, दयां कुर्वन्ति सर्वदा ॥ ५ ॥ मुक्तिकारणधर्माय, पापनिःकन्दनाय च । अवतारः कृतोऽमीषां, मया देवि! युगे युगे ॥ ६ ॥ यदमीषां महर्षीणां, जलदानादपि प्रिये! । सुकृतं प्राप्यते लोकैर्न हि तद्यज्ञकोटिभिः ॥ ७ ॥ स्पृष्ट्वा शत्रुञ्जयं

१ क्षान्तस्य दान्तस्य जितेन्द्रियस्याध्यात्मयोगे गतमानसस्य । किं ममैतेन विचिन्तितेन सकुण्डलं वदनं नवेति ॥ १७ ॥ क्षान्तस्य दान्तस्य जितेन्द्रियस्याध्यात्मयोगे गतमानसस्य । पुरो भ्रमन्त्या अप्यङ्गनायाः सकुण्डलं वा वदनं नवेति ॥ १८ ॥ चित्तं चोर्ध्वं घनमण्डले विक्षिप्तचित्तेन मया न ज्ञातम् । पुरो भ्रमन्त्या अङ्गनायाः सकज्जलं वा नयनं नवेति ॥ १९ ॥

तीर्थे, नत्वा रैवतकाचलम् । स्नात्वा गजपदे कुण्डे, पुनर्जन्म न विद्यते ॥ ८ ॥ अष्टषष्टिषु तीर्थेषु, यत्पुण्यं किल या-
त्रया । आदिनाथस्य देवस्य, दर्शनेनापि तद्भवेत् ॥ ९ ॥ भक्तिं तीर्थकरे गुरौ जिनमते सङ्घे च हिंसाऽनृतस्तेयाब्रह्मप-
रिग्रहव्युपरमं क्रोधाद्यरीणां जयम् । सौजन्यं गुणिसङ्गमिन्द्रियदमं दानं तपो भावनां, वैराग्यं च कुरुष्व निर्वृतिपदे य-
द्यस्ति गन्तुं मनः ॥ १० ॥

## देवस्वरूपसूक्तानि ६१

अनध्ययनविद्वांसो, निर्द्रव्यपरमेश्वराः । अनलङ्कारसुभगाः, पान्तु युष्मान् जिनेश्वराः ॥ १ ॥ येषां च देहो० । प्रश-
मरसनिमग्नं० । नेत्रे साम्य० । वपुरेव तवाचष्टे० । वपुश्च पर्यङ्कशयं श्लथं च, दृशौ च नासानियते स्थिरे च । न शिक्षितेयं
परतीर्थनाथैर्जिनेन्द्र ! मुद्राऽपि तवान्यदास्ताम् ॥ २ ॥ भवबीजाङ्कुरजनना रागाद्याः क्षयमुपागता यस्य । ब्रह्मा वा
विष्णुर्वा हरो जिनो वा नमस्तस्मै ॥ ३ ॥ प्राकारमण्डपच्छत्रपर्यङ्कासनसंस्थितः । निर्दो(षो)मूर्त्या दृष्ट्या च, देवो नैव
जिनात्परः ॥४॥ अशोकवृक्षः सुरपुष्पवृष्टिर्दिव्यध्वनिश्चामरमासनं च । भामण्डलं दुन्दुभिरातपत्रं, सत्प्रातिहार्याणि जिने-
श्वराणाम् ॥ ५ ॥ दर्पणो भद्रपीठं च, वर्द्धमानककुम्भकौ । मत्स्यश्रीवत्सस्वस्तिकनन्दावर्त्ताः स्युरष्ट ते ॥ ६ ॥ पुष्पा-
द्यर्चा तदाज्ञा च, तद्द्रव्यपरिरक्षणम् । उत्सवास्तीर्थयात्रा च, भक्तिः पञ्चविधा जिने ॥ ७ ॥ रक्खंतो जिणदव्वं परित्तसं-
सारिओ जिओ होइ । वड्ढंतो जिणदव्वं तित्थयरत्तं लहइ जीवो ॥ ८ ॥

१ रक्षन् जिनद्रव्यं परीत्तसंसारः जीवो भवति । वर्धयन् जिनद्रव्यं तीर्थकरत्वं लभते जीवः ॥ ८ ॥

## पूजासंबन्धिसूक्तानि ६२

वरगंधधूवचुक्खक्खएहिं कुसुमेहिं पवरदीवेहिं । नेविज्जजलफलेहि अ जिणपूआ अट्ठहा भणिआ ॥ १ ॥ जो पूएइ तिसंझं जिणिंदरायं तहा विगयदोसं । सो तइअभवे सिज्झइ अहवा सत्तट्ठमे जम्मे ॥ २ ॥ जिनपूजनं जनानां जनयत्येकमपि संपदो विपुलाः । जलमिव जलदविमुक्तं काले शस्यश्रियो ह्यखिलाः ॥ ३ ॥ जिनस्य पूजनं हन्ति, प्रातः पापं निशाभवम् । आजन्मविहितं मध्ये, सप्तजन्मकृतं निशि ॥ ४ ॥ फलं पूजाविधातुः स्यात्सौभाग्यं जनमान्यता । ऐश्वर्यं रूपमारोग्यं, स्वर्गमोक्षसुखान्यपि ॥ ५ ॥ चित्रं जगत्रयीभर्तुः, संलग्ना कुसुमावली । स्वर्गापवर्गसंप्राप्तिफलं भव्येषु यच्छति ॥ ६ ॥ पूजाकोटिसमं स्तोत्रं, स्तोत्रकोटिसमो जपः । जपकोटिसमं ध्यानं, ध्यानकोटिसमो लयः ॥ ७ ॥ पूर्वं नवाङ्गं नवभिः प्रसूनैः, पूजा कृता श्येनकमालिकेन । ततो नवस्वेव भवेषु लक्ष्मीं, नवां नवां प्राप शिवर्द्धिमन्ते ॥ ८ ॥ स्वर्गस्तस्य गृहाङ्गणं सहचरी साम्राज्यलक्ष्मीः शुभा, सौभाग्यादिगुणावलिर्विलसति स्वैरं वपुर्वेश्मनि । संसारः सुतरः शिवं करतलक्रोडे लुठत्यञ्जसा, यः श्रद्धाभरभाजनं जिनपतेः पूजां विधत्ते जनः ॥ ९ ॥ यः पुष्पैर्जिनमर्चति स्मितसुरस्त्रीलोचनैः सोऽर्च्यते, यस्तं वन्दत एकशस्त्रिजगता सोऽहर्निशं वन्द्यते । यस्तं स्तौति परत्र वृत्रदमनस्तोमेन स स्तूयते, यस्तं ध्यायति क्लृप्तकर्मनिधनः स ध्यायते योगिभिः ॥ १० ॥ अक्षतैरुज्ज्वलैः स्थालं, भृतं येन जिनाग्रतः । श्रेयो-

१ वरगन्धधूपचोक्षाक्षतैः कुसुमैः प्रवरदीपैः । नैवेद्यजलफलैश्च जिनपूजा अष्टधा भणिता ॥ १ ॥ यः पूजयति त्रिसन्ध्यं जिनेन्द्रराजं तथा विगतदोषम् । स तृतीयभवे सिध्यति अथवा सप्ताष्टमे जन्मनि ॥ २ ॥

भिस्ताद्दशैरेव, तैरात्मा परिपूरितः ॥ ११ ॥ वस्त्रैर्वस्त्रविभूतयः शुचितरालङ्कारतोऽलङ्कृतिः, पुष्पैः पूज्यपदं सुगन्धिततनुता
गन्धैर्जिने पूजिते । दीपैर्ज्ञानमनावृतं निरुपमा भोगर्द्धिरन्नादिभिः, सन्त्येतानि किमद्भुतं शिवपदप्राप्तिस्ततो देहिनाम्
॥ १२ ॥ आयुष्कं यदि सागरोपममितं व्याधिव्यथावर्जितं, पाण्डित्यं च समस्तवस्तुविषयं प्रावीण्यलब्धास्पदम् । जिह्वा
कोटिमिता च पाटवयुता स्यान्मे धरित्रीतले, नो शक्नोमि तथापि वर्णितुमलं तीर्थेशपूजाफलम् ॥ १३ ॥ उपसर्गाः क्षयं
यान्ति, छिद्यन्ते विघ्नवल्लयः । मनः प्रसन्नतामेति, पूज्यमाने जिनेश्वरे ॥ १४ ॥ यान्ति दुष्टदुरितानि दूरतः, कुर्वते स-
पदि संपदः पदम् । भूषयन्ति भुवनानि कीर्त्तयः, पूजया विहितया जगद्गुरोः ॥ १५ ॥ न यान्ति दास्यं न दरिद्रभावं,
न प्रेष्यतां नैव च हीनयोनिम् । न चापि वैकल्यमिहेन्द्रियाणां, ये कारयन्त्यत्र जिनेन्द्रपूजाम् ॥ १६ ॥ पापं लुम्पति
दुर्गतिं दलयति व्यापादयत्यापदं, पुण्यं संचिनुते श्रियं वितनुते पुष्णाति नीरोगताम् । वैराग्यं विदधाति पल्लवयति
प्रीतिं प्रसूते यशः, स्वर्गं यच्छति निर्वृतिं च रचयत्यर्चाऽर्हतां निर्मिता ॥ १७ ॥ नौरेषा भववारिधौ शिवपदप्रासादनिःश्रे-
णिका, मार्गः स्वर्गपुरस्य दुर्गतिपुरद्वारप्रवेशार्गला । कर्मग्रन्थिशिलोच्चयस्य दलने दम्भोलिधारासमा, कल्याणैकनिकेतनं
निगदिता पूजा जिनानां परा ॥ १८ ॥ नेत्रानन्दकरी भवोदधितरी श्रेयस्तरोर्मञ्जरी, श्रीमद्धर्ममहानरेन्द्रनगरी व्याप-
ल्लताधूमरी । हर्षोत्कर्षशुभप्रभावलहरी भावद्विषां जित्वरी, पूजा श्रीजिनपुङ्गवस्य विहिता श्रेयस्करी देहिनाम् ॥ १९ ॥
दर्शनेन जिनेन्द्राणां, साधूनां वन्दनेन च । न तिष्ठति चिरं पापं, छिद्रहस्ते यथोदकम् ॥ २० ॥ अद्य प्रक्षालितं गात्रं,
नेत्रे च विमलीकृते । मुक्तोऽहं सर्वपापेभ्यो, जिनेन्द्र! तव दर्शनात् ॥ २१ ॥

## जिनबिम्बसंबन्धिसूक्तानि ६३

अङ्गुष्ठमानमपि यः प्रकरोति बिम्बं, वीरावसानवृषभादिजिनेश्वराणाम् । स्वर्गे प्रधानविपुलर्द्धिसुखानि भुङ्क्त्वा, पश्चादनुत्तरगतिं समुपैति धीरः ॥ १ ॥ जो कारवेइ पडिमं जिणाण जिअरागदोसमोहाणं । सो पावइ अन्नभवे सुहजम्मं धम्मवररयणं ॥ २ ॥ दारिद्दं दोहग्गं कुजाइकुसरीरकुमइकुगईओ । अवमाणरोगसोगा न हुंति जिणबिंबकारीणं ॥ ३ ॥ रम्यं येन जिनालयं निजभुजोपात्तेन कारापितं, मोक्षार्थं स्वधनेन शुद्धमनसा पुंसा सदाचारिणा । वेद्यं तेन नरामरेन्द्रमहितं तीर्थेश्वराणां पदं, प्राप्तं जन्मफलं कृतं जिनमतं गोत्रं समुद्योतितम् ॥ ४ ॥

## जिनप्रणामसंबन्धिसूक्तानि ६४

यास्याम्यायतनं जिनस्य लभते ध्यायंश्चतुर्थं फलं, षष्ठं चोत्थितुमुद्यतोऽष्टममथो गन्तुं प्रवृत्तोऽध्वनि । श्रद्धालुर्दशमं बहिर्जिनगृहात्प्राप्तस्ततो द्वादशं, मध्ये पाक्षिकमीक्षिते जिनपतौ मासोपवासं फलम् ॥ १ ॥ असर्वभावेन यदृच्छया वा, परानुवृत्त्या भयतृष्णया वा । ये त्वां नमस्यन्ति जिनेन्द्रचन्द्र !, तेऽप्यामरीं संपदमाप्नुवन्ति ॥ २ ॥ अष्टषष्टिषु तीर्थेषु, यत्पुण्यं किल यात्रया । आदिनाथस्य देवस्य, दर्शनेनापि तद्भवेत् ॥ ३ ॥ शाठ्येनापि नमस्कारं, यः करोति जिनेश्वरे ।

१ यः कारयति प्रतिमां जिनानां जितरागद्वेषमोहानाम् । स प्राप्नोत्यन्यभवे सुखजन्म धर्मवररत्नम् ॥ २ ॥ दारिद्र्यं दौर्भाग्यं कुजातिकुशरीरकुमतिकुगतयः । अपमानरोगशोकाः न भवन्ति जिनबिम्बकारिणाम् ॥ ३ ॥

जन्मना यत्कृतं पापं, दहत्यग्निरिवेन्धनम् ॥ ४ ॥ अरिहंतनमुक्कारो जीवं मोएइ भवसहस्साओ। भावेण कीरमाणो होइ पुणो वोहिलाभाए ॥५॥ अरिहंतनमुक्कारो धन्नाण भवक्खयं करंताणं। हिअयं अणमोअंतो विसुत्तिआवारओ होइ ॥ ६ ॥

## नमस्कारसूक्तानि ६५

जिणसासणस्स सारो चउदसपुव्वाण जो समुद्धारो । जस्स मणे नवकारो संसारो तस्स किं कुणइ? ॥ १ ॥ हिंसावाननृतप्रियः परधनाहर्ता परस्त्रीरतः, किं चान्येष्वपि लोकगर्हितमहापापेषु गाढोद्यतः। मन्त्रेशं स यदि स्मरेदविरतं प्राणात्यये सर्वथा, दुष्कर्मार्जितदुर्गदुर्गतिरपि स्वर्गीभवेन्मानवः ॥ २ ॥ करआवत्तइ जो पंचमंगलं साहुपडिमसंखाए। नववारा आवत्तइ छलंति तं नो पिसायाई ॥ ३ ॥ एसो मंगलनिलओ भवविलओ सव्वसंतिजणओ अ। नवकार परममंतो चिंतिअमित्तो सुहं देइ ॥४॥ अप्पुव्वो कप्पतरू एसो चिंतामणी अपुव्वो अ। जो झायइ सयकालं सो पावइ सिवसुहं विउलं ॥ ५ ॥ नवकारइक्कअक्खर पावं फेडेइ सत्त अयराणं। पन्नासं च पएणं पंचसयाइं समग्गेणं ॥ ६ ॥

---

१ अर्हन्नमस्कारो जीवं मोचयति भवसहस्रात्। भावेन क्रियमाणो भवति पुनर्बोधिलाभाय ॥ ५ ॥ अर्हन्नमस्कारः धन्यानां भवक्षयं कुर्वताम्। हृदयममोचयन् विस्रोतसिकावारको भवति ॥ ६ ॥ २ जिनशासनस्य सारश्चतुर्दशपूर्वाणां यः समुद्धारः। यस्य मनसि नमस्कारः संसारस्तस्य किं करोति? ॥ १ ॥ करावर्त्तेन यः पञ्चमङ्गलं साधुप्रतिमासंख्यया। नववारान् आवर्त्तयति तं न छलयन्ति पिशाचाद्याः ॥ ३ ॥ एष मङ्गलनिलयो भवविलयः सर्वशान्तिजनकश्च। नमस्कारः परममन्त्रश्चिन्तितमात्रः सुखं ददाति ॥ ४ ॥ अपूर्वः कल्पतरुरेष चिन्तामणिरपूर्वश्च। यो ध्यायति सदा कालं स प्राप्नोति शिवसुखं विपुलम् ॥ ५ ॥ नमस्कारस्यैकमक्षरं पापं स्फेटयति सप्तानामतराणाम्। पञ्चाशच्च पदेन पञ्च शतानि समग्रेण ॥ ६ ॥

जो गुणइ लक्खमेगं पूएइ विहीइ जिणनमुक्कारं । तित्थयरनामगोअं सो बंधइ नत्थि संदेहो ॥ ७ ॥ अट्ठेव य अट्ठसया अट्ठसहस्सं च अट्ठ कोडीओ । जो गुणइ भत्तिजुत्तो सो पावइ सासयं ठाणं ॥ ८ ॥

## यात्रासंबन्धिसूक्तानि ६६

नमस्कारसमो मन्त्रः, शत्रुञ्जयसमो गिरिः । गजेन्द्रपदजं नीरं, निर्द्वंद्वं भुवनत्रये ॥ १ ॥ कृत्वा पापसहस्राणि, हत्वा जन्तुशतानि च । इदं तीर्थं समासाद्य, तिर्यञ्चोऽपि दिवं गताः ॥ २ ॥ स्पृष्ट्वा शत्रुञ्जयं तीर्थं, नत्वा रैवतकाचलम् । स्नात्वा गजपदे कुण्डे, पुनर्जन्म न विद्यते ॥ ३ ॥ यो दृष्टो दुरितं हन्ति, प्रणतो दुर्गतिद्वयम् । संघेशार्हन्त्यपदकृत्, स जीयाद्विमलाचलः ॥ ४ ॥ वच्मः किमस्य चोच्चैस्त्वं, येन पूर्वजिनेशितुः । अधिरुह्यात्र लोकाग्रं, पौत्रैरपि करे कृतम् ॥ ५ ॥ शत्रुञ्जयाद्रिरयमादियुगे गरीयानासीदसीमसुकृतोदयराशिरेव । आदीयमानसुकृतः किल भव्यलोकैः, काले कलौ भजति सम्प्रति दुर्बलत्वम् ॥ ६ ॥ पल्योपमसहस्रं तु, ध्यानाल्लक्षमभिग्रहात् । दुष्कर्म क्षीयते मार्गे, सागरोपमसंचितम् ॥ ७ ॥ शत्रुञ्जये जिने दृष्टे, दुर्गतिद्वितयं क्षिपेत् । सागराणां सहस्रं च, पूजास्नात्रविधानतः ॥ ८ ॥ मिथ्यात्वगरलोद्गारः, सम्यग्दृष्टिसुधारसः । पूर्वो ह्रस्वः परो दीर्घो, नाभिनन्दनवन्दने ॥ ९ ॥ सदा शुभध्यानमसारलक्ष्म्याः, फलं चतुर्धा सुकृताधिरुच्चैः । तीर्थोन्नतिस्तीर्थकृतां पदाप्तिर्गुणा हि यात्राप्रभवाः स्युरेते ॥ १० ॥ श्रीतीर्थपान्थरजसा विरजीभ-

१ यो गुणयति लक्षमेकं पूजयति विधिना जिननमस्कारम् । तीर्थंकरनामगोत्रं स बध्नाति नास्ति संदेहः ॥ ७ ॥ अष्टौ एव च अष्ट शतानि, अष्ट सहस्रीः अष्ट कोटीः । यो गुणयति भक्तियुक्तः स प्राप्नोति शाश्वतस्थानम् ॥ ८ ॥

वन्ति, तीर्थेषु वम्भ्रमणतो न भवे भ्रमन्ति । तीर्थे व्ययादिह नराः स्थिरसंपदः स्युः, पूज्या भवन्ति जगदीशमथार्च- यन्तः ॥ ११ ॥ आरम्भाणां निवृत्तिर्द्रविणसफलता सङ्घवात्सल्यमुच्चैर्नैर्मल्यं दर्शनस्य प्रणयिजनहितं जीर्णचैत्यादिकृत्यम् । तीर्थोन्नत्यं च सम्यक् जिनवचनकृतिस्तीर्थसत्कर्मकत्वं, सिद्धेरासन्नभावः सुरनरपदवी तीर्थयात्राफलानि ॥ १२ ॥ वपुः पवित्रीकुरु तीर्थयात्रया, चित्तं पवित्रीकुरु धर्मवाञ्छया । वित्तं पवित्रीकुरु पात्रदानतः, कुलं पवित्रीकुरु सच्चरित्रैः ॥ १३ ॥ एअं जम्मस्स फलं सारं विहवस्स इत्तिअं चेव । जं अच्चिजइ गंतुं सित्तुंजे रिसहतित्थयरो ॥ १४ ॥ छट्ठेणं भत्तेणं अपाणएणं तु सत्त जत्ताओ । जो कुणइ सित्तुंजे सो तइअभवे लहइ सिद्धिं ॥ १५ ॥ जीओ (नवि तं) सुवण्णभूमीभूसणदाणेण अन्नतित्थेसु । जं पावइ पुण्णफलं पूआण्हवणेण सित्तुंजे ॥ १६ ॥

## संघेशसंबन्धिसूक्तानि ६७

*अद्य मे फलवती पितुराशा, मातुराशिपि शिखाऽङ्कुरिताऽद्य ।* यद्युगादिजिनयात्रिकलोकं, प्रीणयाम्यहमशेपमखिन्नः ॥ १ ॥ संसारेऽधिगता (सुमता) नरामरभवाः प्राप्ताः श्रियोऽनेकशः, कीर्त्तिः स्फूर्त्तिमदर्जितं च शतशः साम्राज्यमप्यूर्जितम् । स्वाराज्यं बहुधा सुधाशनचयाराध्यं समासादितं, लेभे पुण्यमयं कदापि न पुनः सङ्घाधिपत्यं परम् ॥ २ ॥ तैरात्मा सुपवित्रितो निजकुलं तैर्निर्मलं निर्मितं, तैः संसारमहान्धकूपपततां हस्तावलम्बो ददे । लब्धं जन्मफलं कृतं च

१ एतज्जन्मनः फलं सारं विभवस्य एतावदेव । यदर्च्यते गत्वा शत्रुञ्जये ऋषभतीर्थकरः ॥ १४ ॥ षष्ठेन भक्तेनापानकेन तु सप्त यात्राः यः करोति शत्रुञ्जये स तृतीयभवे लभते सिद्धिम् ॥ १५ ॥ जीवः सुवर्णभूमिभूषणदानेनान्यतीर्थेषु । यत्प्राप्नोति पुण्यफलं तत् पूजास्नपनेन शत्रुञ्जये ॥ १६ ॥

कुगतिद्वारैकसंरोधनं, ये शत्रुञ्जयमुख्यतीर्थनिवहे यात्रासु कृतोद्यमाः ॥ ३ ॥ तैश्चन्द्रे लिखितं स्वनाम विशदं धात्री पवित्रीकृता, ते वन्द्याः कृतिनः सतां सुकृतिनो वंशस्य ते भूषणम् । ते जीवन्ति जयन्ति भूरिविभवास्ते श्रेयसां मन्दिरं, सर्वाङ्गैरपि कुर्वते विधिपरा ये तीर्थयात्रामिमाम् ॥ ४ ॥ भक्तो मातापितॄणां स्वजनपरिजनानन्ददायी प्रशान्तः, श्रद्धालुः शुद्धबुद्धिर्गतमदकलहः शीलवान् दानवर्षी । अक्षोभ्यः सिद्धिगामी परगुणविभवोत्कर्षहृष्टः कृपालुः, सङ्घैश्वर्याधिकारी भवति किल नरो दैवतं मूर्त्तमेव ॥ ५ ॥

## गुरुसंबन्धिसूक्तानि ६८

धर्मज्ञो धर्मकर्त्ता च, सदा धर्मप्रवर्त्तकः । सत्त्वेभ्यो धर्मशास्त्रार्थदेशको गुरुरुच्यते ॥ १ ॥ शुद्धधर्मोपदेशेन, यः सत्त्वानामनुग्रहम् । करोति नितरां तेन, कृतः स्वस्याप्यहो (सौ) महान् ॥ २ ॥ सर्वज्ञोक्तोपदेशेन, यः सत्त्वानामनुग्रहम् । करोति दुःखतप्तानां, स प्राप्नोत्यचिराच्छिवम् ॥ ३ ॥ न भवति धर्मः श्रोतुः सर्वस्यैकान्ततो हितश्रवणात् । ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो भवति ॥ ४ ॥ अरिहंतो असमत्थो तारणि लोआण दीहसंसारे । मग्गादेसणकुसलो तरंति जे मग्गि लगंति ॥ ५ ॥ जो पढइ अपुव्वं सो लहइ तित्थंकरत्तमन्नभवे । जो पुण पढावइ परं सम्मसुअं तस्स किं भणिमो? ॥ ६ ॥ कर्त्तुस्तथा कारयितुः परेण, तुष्टेन चित्तेन तथाऽनुमन्तुः । साहाय्यकर्त्तुश्च शुभाऽशुभेषु, तुल्यं

१ अर्हन्नसमर्थस्तारणे लोकानां दीर्घसंसारात् । मार्गादेशनकुशलस्तरन्ति ये मार्गे लगन्ति ॥ ५ ॥ यः पठति अपूर्वं स लभते तीर्थंकरत्वमन्यभवे । यः पुनः पाठयत्यपरं सम्यक् श्रुतं तस्य किं भणामः? ॥ ६ ॥

फलं तत्त्वविदो वदन्ति ॥ ७ ॥ केऽपि प्रवालमिव रागभृतः स्वयं तु, केचिच्च चूर्णकणवत्पररङ्गयोग्याः । काश्मीरजात-मिव सौरभपूरगौरा, धन्याः पुनः स्वपररञ्जकतां भजन्ति ॥ ८ ॥ भूयांसो भूरिलोकस्य, चमत्कारकरा नराः । रञ्जयन्ति स्वचित्तं ये, भूतले ते तु पञ्चषाः ॥ ९ ॥ अन्नन्नदेसजाया अन्नन्नकुलेसु वड्डिअसरीरा । जिणसासणं पवन्ना सव्वे ते बंधवा भणिआ ॥ १० ॥ कृत्रिमैर्डम्बरैश्चित्रैः, शक्यस्तोषयितुं परः । आत्मा तु वास्तवैरेव, हेतुभिः परितुष्यति ॥ ११ ॥ सस्पृहाणामयं धर्मो, यद्गुणैः पररञ्जनम् । निःस्पृहाणामयं धर्मो, मौनं मानसरञ्जनम् ॥ १२ ॥ पढइ गुणइ वचइ वक्खा-णइ, अप्पा कज्जं किं पि न याणइ । चट्टु जिम छइ रस ढंढोलइ, कज्जि पराअइ अप्पुं बोलइ ॥ १३ ॥ अक्खरु अक्खइ किंपि न ईहइ, चउगइ भवसंसारह बीहइ । संजम निअमेहिं खणु नवि मुचइ, एसो धामी सुहगुरु वुच्चइ ॥ १४ ॥ हुं हुं धरि भद्दा (ज्ज करी) सणु किज्जइ, कवणु सीसु गुरु कवण भणिज्जइ । मूढओं लोओ अयाणो ण वुज्झइ, कद्दमु कद्दमेण न विसुज्झइ ॥ १५ ॥ स्वेच्छाविरचितशास्त्रैः प्रव्रज्यावेषधारिभिः क्षुद्रैः । नानाविधैरुपायैरनाथवन्मुष्यते लोकः ॥ १६ ॥ अज्ञानतिमिरान्धस्य, ज्ञानाञ्जनशलाकया । नेत्रमुन्मीलितं येन, तस्मै श्रीगुरवे नमः ॥ १७ ॥ थोवा कप्पूरदुमा रयण-पसूआवि आगरा थोवा । सप्पुरिसावि अ थोवा सुगइमग्गं पयासंता ॥ १८ ॥ गुरुणो भट्टा जाया सड्ढे थुणिऊण

---

१ अन्यान्यदेशजाता अन्यान्यकुलेषु वर्धितशरीराः । जिनशासनं प्रपन्नाः सर्वे ते बान्धवाः भणिताः ॥ १० ॥ स्तोकाः कर्पूरद्रुमा रत्नप्रसूतिका आकराः स्तोकाः सत्पुरुषा अपि च स्तोकाः सुगतिमार्गं प्रकाशयन्तः ॥ १८ ॥ गुरवो भट्टा जाताः श्राद्धान् स्तुत्वा लान्ति दानानि । द्वावपि अमुणितस-मवसारौ दुष्षमासमये मूडन्ति ॥ १९ ॥

लिंति दाणाइं । दुण्णिवि अमुणिअसारा दूसमसमयंमि वुड्डुंति ॥ १९ ॥ गुरुरेव विजानाति, कृत्याकृत्यविवेचनम् । मक्षिका वमनी प्रोक्ता, तद्विष्टा छर्दिनाशिनी ॥ २० ॥ जिणवरवयणसिलाइहं जाहं नवि विद्धा कन्न । माणसवेसिं गोरूअं, ताहं नवि वुद्धि न सन्न ॥ २१ ॥ विना गुरुभ्यो गुणनीरधिभ्यो, जानाति धर्मं न विचक्षणोऽपि । विना प्रदीपं शुभलोचनोऽपि, निरीक्षते कुत्र पदार्थसार्थम्? ॥ २२ ॥ अवद्यमुक्ते पथि यः प्रवर्त्तते, प्रवर्त्तयत्यन्यजनं च निःस्पृहः । स एव सेव्यः स्वहितैषिणा गुरुः, स्वयं तरंस्तारयितुं क्षमः परम् ॥ २३ ॥ विदलयति कुबोधं बोधयत्यागमार्थं, सुगतिकुगतिमार्गौ पुण्यपापे व्यनक्ति । अवगमयति कृत्याकृत्यभेदं गुरुर्यो, भवजलनिधिपोतस्तं विना नास्ति कश्चित् ॥ २४ ॥ इहलोकविधीन् कुरुते स्वयं जनो न तु गुरुं विना धर्मम् । अश्वो हि तृणान्यत्ति स्वयं घृतं पाय्यतेऽन्येन ॥ २५ ॥ पूर्वं वीरजिनेश्वरेऽपि भगवत्याख्याति धर्मं स्वयं, प्रज्ञावत्यभयेऽपि मन्त्रिणि न यां कर्त्तुं क्षमः श्रेणिकः । अक्लेशेन कुमारपालनृपतिस्तां जीवरक्षां व्यधात्, पीत्वा यस्य वचःसुधां स परमः श्रीहेमसूरिर्गुरुः ॥ २६ ॥ एकादशाश्वलक्षाणि, गजेन्द्राणां शतानि च । पत्तिकोट्यो द्वादश स्यु, रथाः पञ्चायुतीमिताः ॥ २७ ॥ आज्ञावर्त्तिषु मण्डलेषु विपुलेष्वष्टादशस्वादराद्ब्दान्येव चतुर्दश प्रसृमरां मारिं निवार्यौजसा । कीर्त्तिस्तम्भनिभांश्चतुर्दशशतीसंख्यान् विहारांस्तथा, जैनान्निर्मितवान् कुमारनृपतिर्द्रव्यव्ययं भूरिशः ॥ २८ ॥ धन्यस्योपरि निपतत्यहितसमाचरणधर्मनिर्वापी । गुरुवदनमलयनिःसृतवचनरसश्चान्दनस्पर्शः ॥२९॥ धन्नाण[1] चेव गुरुणो आएसं दिंति गुणमहोदहिणो । चंदणरसो अपुण्णाण निवडए नेव अंगंमि ॥३०॥

[1] धन्यानामेव गुरव आदेशं ददति गुणमहोदधय । चन्दनरसोऽपुण्यानां निपतति नैवाङ्गे ॥ ३० ॥

धन्नो सो जिअलोए गुरवो निवसंति जस्स हिअयंमि । धन्नाणवि सो धन्नो गुरूण हिअए वसइ जो उ ॥ ३१ ॥ सत्थं हिअयपविट्ठं मारइ मणुअं जणे पसिद्धमिणं । तंपि गुरुणा पउत्तं जीवावइ पिच्छ अच्छरिअं ॥ ३२ ॥ धन्ना ते-च्चिअ पुरिसा जे गुरुवयणं करिंति पच्चक्खं । धन्नाणवि ते धन्ना कुणंति देसंतरगया जे ॥ ३३ ॥ धन्नाणं विहिजोगो विहिपक्खाराहगा सया धन्ना । विहिबहुमाणी धन्ना विहिपक्खअदूसगा धन्ना ॥ ३४ ॥ एकमप्यक्षरं यस्तु, गुरुः शिष्ये निवेदयत् । पृथिव्यां नास्ति तद् द्रव्यं, यत्प्रदायानृणीभवेत् ॥ ३५ ॥ एकाक्षरप्रदातारं, यो गुरुं नाभिमन्यते । स श्वयोनिशतं गत्वा, चण्डालेष्वपि जायते ॥ ३६ ॥

## श्रीसङ्घसंबन्धिसूक्तानि ६९

पूतं धाम निजं कुलं विमलितं जातिः समुद्योतिता, छिन्नं दुर्गतिदाम नाम लिखितं शीतद्युतेर्मण्डले । दत्तो दुःखजलाञ्जलिर्निरुपमं न्यासीकृतं स्वःसुखं, येनेत्थं शिवशर्मकार्मणमणेः सङ्घस्य पूजा कृता ॥ १ ॥ रत्नानामिव रोहणः क्षितिधरः खं तारकाणामिव, स्वर्गः कल्पमहीरुहामिव सरः पङ्केरुहाणामिव । पाथोधिः पयसां शशीव महसां स्थानं गुणा-

---

१ धन्यः स जीवलोके गुरवो निवसन्ति यस्य हृदये । धन्यानामपि स धन्यो गुरूणां हृदये वसति यस्तु ॥ ३१ ॥ शस्त्रं हृदयप्रविष्टं मारयति मनुजं जने प्रसिद्धमिदम् । तदपि गुरुणा प्रयुक्तं जीवयति पश्याऽश्चर्यम् ॥ ३२ ॥ धन्यास्त एव पुरुषा ये गुरुवचनं कुर्वन्ति प्रत्यक्षम् । धन्यानामपि ते धन्याः कुर्वन्ति देशान्तरगता ये ॥ ३३ ॥ धन्यानां विधियोगो विधिपक्षाराधकाः सदा धन्याः । विधिबहुमानिनो धन्या विधिपक्षादूषका धन्याः ॥ ३४ ॥

नामसावित्यालोच्य विरच्यतां भगवतः सङ्घस्य पूजाविधिः ॥ २ ॥ कदा किल भविष्यन्ति, मद्गृहाङ्गणभूमयः । श्रीसङ्घ-चरणाम्भोजरजोराजिपवित्रिताः ॥ ३ ॥ रुचिरकनकधाराः प्राङ्गणे तस्य पेतुः, प्रचरमणिनिधानं तद्गृहान्तःप्रविष्टं । अमरतरुलतानामुद्गमस्तस्य गेहे, भवनमिह सहर्षं यस्य पस्पर्श सङ्घः ॥ ४ ॥ कल्पोर्वीरुहसंततिस्तदजिरे चिन्तामणिस्तत्करे, श्लाघ्या कामदुघाऽनघा च सुरभी तस्यावतीर्णा गृहे । त्रैलोक्याधिपतित्वसाधनसहा श्रीस्तन्मुखं वीक्षते, सङ्घो यस्य गृहाङ्गणं गुणयुतः पादैः समाक्रामति ॥ ५ ॥ यद्भक्तेः फलमर्हदादिपदवी मुख्यं कृपेः शस्यवत्, चक्रित्वत्रिदशेन्द्रतादि तृणवत्प्रासङ्गिकं गीयते । शक्तिं यन्महिमस्तुतौ न दधते वाचोऽपि वाचस्पतेः, सङ्घः सोऽघहरः पुनातु चरणन्यासैः सतां मन्दिरम् ॥ ६ ॥ यः संसारनिरासलालसमतिर्मुक्त्यर्थमुत्तिष्ठते, यं तीर्थं कथयन्ति पावनतया येनास्ति नान्यः समः । यस्मै तीर्थपतिर्नमस्यति सतां यस्माच्छुभं जायते, स्फूर्तिर्यस्य परा वसन्ति च गुणा यस्मिन् स सङ्घोऽर्च्यताम् ॥ ७ ॥

## श्रीसङ्घाशीर्वादसूक्तानि ७०

विश्वं सरोवरं तत्र, कमले जिनशासने । चिरं विवेकवान् जीयात्, श्रीसङ्घो राजहंसवत् ॥ १ ॥ जिनवन्यो गुणराशिर्वन्दनीयो महात्मनाम् । सङ्घः सोऽघहरो जीयाद्विश्वस्तुतिपथातिगः ॥ २ ॥ नक्षत्राक्षतपूरितं मरकतस्थालं विशालं नभः, पीयूषद्युतिनालिकेरकलितं चन्द्रप्रभाचन्दनम् । यावन्मेरुकरे गभस्तिकटके धत्ते धरित्रीवधूस्तावन्नन्दतु धर्मकर्मनिरतः श्रीसङ्घभट्टारकः ॥ ३ ॥ स्फूर्जन्नागेन्द्रनाले दिगुपचितदले तारकाबीजजाले, क्षोणीभृत्केसराले कनकगिरिलस-

स्कर्णिकाचक्रवाले । यावद्व्योमाम्बुजेऽस्मिन् स्फुरदुरुललितं राजते राजहंसद्वन्द्वं निर्द्वन्द्वमेतज्जगति विजयतां तावदे-
षोऽत्र सङ्घः ॥ ४ ॥

## दयासंवन्धिसूक्तानि ७१

शतेषु जायते शूरः, सहस्रेषु च पण्डितः । वक्ता शतसहस्रेषु, दाता भवति वा न वा ॥ १ ॥ न रणे विजयी शूरो, धर्मं चरति प-
विद्यया न च पण्डितः । न वक्ता वाक्पटुत्वेन, न दाता धनदायकः ॥ २ ॥ इन्द्रियाणां जये शूरो, धर्मं चरति प-
ण्डितः । सत्यवादी भवेद्वक्ता, दाता भूताभयप्रदः ॥ ३ ॥ अहिंसासंभवो धर्मः, स हिंसातः कथं भवेत्? । न तोय-
जानि पद्मानि, जायन्ते जातवेदसः ॥ ४ ॥ कृपानदीमहातीरे, सर्वे धर्मास्तृणाङ्कुराः । तस्यां शोषमुपेतायां, कियन्न-
न्दन्ति ते पुनः ॥ ५ ॥ निर्गुणेष्वपि सत्त्वेषु, दयां कुर्वन्ति साधवः । न हि संहरति ज्योत्स्नां, चन्द्रश्चण्डालवेश्मसु ॥ ६ ॥
किं[1] ताए पढिआए पयकोडीए पलालभूआए? । जत्थित्तियं न नायं परस्स पीडा न कायव्वा ॥ ७ ॥ इक्कहजीविअ-
कारणेहिं, मारि म जीवसयाइं । अज्जहिं कल्लहिं मरण तुं, पामिसि दुक्खसयाइं ॥ ८ ॥ इक्कस्स कए निअजीविअस्स
बहुआओ जीवकोडीओ । दुक्खे ठवंति जे केइ ताणं किं सासयं जीअं? ॥ ९ ॥ न सा दीक्षा न सा भिक्षा, न तद्दानं
न तत्तपः । न तद्ध्यानं न तन्मौनं, दया यत्र न विद्यते ॥ १० ॥ दयादयितया शून्ये, मनोवासगृहे नृणाम् । दानादि-

१ किं तया पठितया पदकोट्या पलालभूतया । यत्रैतावन्न ज्ञातं परस्य पीडा न कर्तव्या ॥ ७ ॥ २ एकस्य कृते निजजीवितस्य बह्वयो जीवकोटयः । दुःखे स्थाप्यन्ते यैः कैश्चित् तेषां किं शाश्वतं जीवितम् ॥ ८ ॥

दूराहृतोऽपि, धर्मोऽयं नावतिष्ठते ॥ ११ ॥ यस्य चित्तं द्रवीभूतं, कृपया सर्वजन्तुषु । तस्य ज्ञानं च मोक्षश्च, न जटाभस्मचीवरैः ॥ १२ ॥ पठितं श्रुतं च शास्त्रं गुरुपरिचरणं गुरु तपश्चरणम् । घनगर्जितमिव विपुलं विफलं सकलं दयाविकलम् ॥ १३ ॥ हंतूण परप्पाणे अप्पाणं जो करेइ सप्पाणं । अप्पाणं दिअहाणं कए अ नासेइ अप्पाणं ॥ १४ ॥[1] सर्वाणि भूतानि सुखे रतानि, सर्वाणि दुःखस्य समुद्विजन्ति । तस्मात्सुखार्थी सुखमेव दत्ते, सुखप्रदाता लभते सुखानि ॥ १५ ॥ वसन्त्यरण्येषु चरन्ति दूर्वां, पिबन्ति तोयान्यपरिग्रहाणि । तथापि वध्या हरिणा नराणां, को लोकमाराधयितुं समर्थः? ॥ १६ ॥ वैरिणोऽपि हि मुच्यन्ते, प्राणान्ते तृणभक्षणात् । तृणाहाराः सदैवैते, हन्यन्ते पशवः कथम्? ॥ १७ ॥ रसातलं यातु यदत्र पौरुषं, कुनीतिरेषाऽशरणो ह्यदोषवान् । विहन्यते यद्बलिनाऽपि दुर्बलो, हहा महाकष्टमराजकं जगत् ॥ १८ ॥ येषां प्राणिवधः क्रीडा, नर्ममर्मपरं वचः । कार्यं परोपतापित्वं, ते मृत्योरपि मृत्यवः ॥ १९ ॥ यदि ग्रावा तोये तरति तरणिर्यद्युदयति, प्रतीच्यां सप्तार्चिर्यदि भजति शैत्यं कथमपि । यदि क्ष्मापीठं स्यादुपरि सकलस्यापि जगतः, प्रसूते सत्त्वानां तदपि न वधः क्वापि सुकृतम् ॥ २० ॥ क्रीडाभूः सुकृतस्य दुष्कृतरजःसंहारवात्या भवोदन्वन्नौर्व्यसनाग्निमेघपटली संकेतदूती श्रियाम् । निःश्रेणिस्त्रिदिवौकसः प्रियसखी मुक्तेः कुगत्यर्गला, सत्त्वेषु क्रियतां कृपैव भवतु क्लेशैरशेषैः परैः ॥ २१ ॥ आयुर्दीर्घतरं वपुर्वरतरं गोत्रं गरीयस्तरं, वित्तं भूरितरं बलं बहुतरं स्वामित्वमुच्चैस्तरम् । आरोग्यं विगतान्तरं त्रिजगतः श्लाघ्यत्वमल्पेतरं, संसाराम्बुनिधिं करोति सुतरं चेतः कृपासंकुलम् ॥२२॥

[1] हत्वा परप्राणान् आत्मानं यः करोति सप्राणम् । अल्पानां दिवसानां कृते च नाशयति आत्मानम् ॥ १४ ॥

जं[1] आरुग्गमुदग्गमप्पडिहयं आणेसरत्तं फुडं, रूवं अप्पडिरूवमुज्जलतरा कित्ती धणं जुव्वणं । दीहं आउ अवंचणो परिअणो पुत्ता सुपुण्णासया, तं सव्वं सचराचरंमिवि जए नूणं दयाए फलं ॥ २३ ॥ जीवह जीव आहारु जीवह विणु जीवइ नहि । कहि प्रभु! करिओ पसायो जीवदया किमु पालिअइ? ॥ २४ ॥ जइ किरइ मनसुद्धि जीवह राखेवा तणि । सुणिय भो भविअ! विचारु जीवदया इम पालिअइ ॥ २५ ॥

## सत्यसंवन्धिसूक्तानि ७२

कुर्वन्ति देवा अपि पक्षपातं, नरेश्वराः शासनमुद्वहन्ति । शान्ता भवन्ति ज्वलनादयो यत्तत्सत्यवाचां फलमामनन्ति ॥ १ ॥ तस्याग्निर्जलमर्णवः स्थलमरिर्मित्रं सुराः किङ्कराः, कान्तारं नगरं गिरिर्गृहमहिर्माल्यं मृगारिर्मृगः । पातालं बिलमस्त्रमुत्पलदलं व्यालः शृगालो विषं, पीयूषं विषमं समं च वचनं सत्यांचितं वक्ति यः ॥ २ ॥ विश्वासायतनं विपत्तिदलनं देवैः कृताराधनं, मुक्तेः पथ्यदनं जलाग्निशमनं व्याघ्रोरगस्तम्भनम् । श्रेयःसंवननं समृद्धिजननं सौजन्यसंजीवनं, कीर्त्तेः केलिवनं प्रभावभवनं सत्यं वचः पावनम् ॥ ३ ॥ मुहमंडणु सचय वयणु, विणु तंबोलह रंग । सील सरीरह आभरणु, सोनइ भारिम अंग ॥ ४ ॥ जेणं[2] परो दूमिज्जइ पाणिवहो होइ जेण भणिएण । अप्पा पडइ अणत्थे न हु तं

---

१ यदारोग्यमुदग्रमप्रतिहतमाज्ञेश्वरत्वं स्फुटं रूपमप्रतिहतमुज्ज्वलतरा कीर्तिर्धनं यौवनम् । दीर्घमायुरवञ्चनः परिजनः पुत्राः सुपुण्याशयाः, तत्सर्वं सचराचरेऽपि जगति नूनं दयायाः फलम् ॥ २३ ॥ २ येन परो दुःख्यते प्राणिवधो भवति येन भणितेन । आत्मा पतति अनर्थे नैव तत् जल्पन्ति गीतार्थाः ॥ ५ ॥

जंपंति गीअत्था ॥ ५ ॥ सच्चइं विसनरु सीअलु सच्चइ देव प्रसन्न । सच्चइं सप्प न सूसूअइं साचासमू न मन्तू ॥ ६ ॥ राज्यं यातु श्रियो यान्तु, यान्तु प्राणा विनश्वराः । या मया स्वयमेवोक्ता, वाचा मा यातु शाश्वती ॥ ७ ॥ एवं करोमीतिकृतप्रतिज्ञो, यः स्वीकृतं नैव करोत्यसत्त्वः । यात्यस्य संस्पर्शजकश्मलानां, प्रक्षालनायेव रविः पयोधिम् ॥ ८ ॥ पलएवि महापुरिसा पडिवन्नं अन्नहा न हु कुणंति । गच्छंति न दीणत्तं कुणंति न हु पत्थणाभंगं ॥ ९ ॥ तत्तिअमित्तं जंपह जत्तिअमित्तस्स निक्कयं हवइ । तं उक्खिवेह भारं जं अद्धपहे न छंडेइ ॥ १० ॥

७२ सत्ये श्लो. १०

## मिथ्यावादसंबन्धिसूक्तानि ७३

लिङ्गिनां परमाधारो, वेश्यानां परमो निधिः । वणिजां परमा नीवी, मृषावाद ! नमोऽस्तु ते ॥ १ ॥ पारदारिकचौराणामस्ति काचित्प्रतिक्रिया । असत्यवादिनः पुंसः, प्रतीकारो न विद्यते ॥ २ ॥ असत्यमप्रत्ययमूलकारणं, कुवासनासद्म समृद्धिवारणम् । विपन्निदानं परवञ्चनोर्जितं, कृतापराधं कृतिभिर्विवर्जितम् ॥ ३ ॥ यत्र यो मुच्यते प्रायस्तत्र स्तेयं करोति सः । कथं न हरते वारि, वारिमध्यस्थिता घटी? ॥ ४ ॥

७३ मिथ्यावादे श्लो. ४

---

१ प्रलयेऽपि महापुरुषाः प्रतिपन्नमन्यथा नैव कुर्वन्ति । गच्छन्ति न दीनत्वं कुर्वन्ति नैव प्रार्थनाभङ्गम् ॥ ९ ॥ तावन्मात्रं जल्पथ यावन्मात्रस्य निश्चयो भवति । तं उत्क्षिपथ भारं यमर्धपथे न त्यजत ॥ १० ॥

गुणरत्नानां, संग्रही नावसीदति ॥ ५ ॥ जणणी जम्मुप्पत्ती पच्छिमनिद्दा सुभासिआ गुट्ठी । मणइट्ठं माणुस्सं पंचवि
दुक्खेहिं मुचंति ॥ ६ ॥ जं अवसरे न हूअं दाणं विणओ सुभासिअं वयणं । पच्छा गयकालेणं अवसररहिएण किं
तेण? ॥७॥ पुरिसह अणइ मुणिवर जइ मुह बूठओ होइ । अच्छइ खूणइ बइठडओ वत्त न पुच्छइ कोइ ॥ ८ ॥ बोलं-
तइ सिउं बोलिअइ वयणह इत्तिअ सार । जइ ओल्हाणि फुंकीइ तओ मुहु भरिअइ छार ॥ ९ ॥

## अदत्तसंबन्धिसूक्तानि ७६

अदत्तं नादत्ते कृतसुकृतकामः किमपि यः, शुभश्रेणिस्तस्मिन् वसति कलहंसीव कमले । विपत्तस्माद्दूरं व्रजति रजनी-
वाम्बरमणेर्विनीतं विद्येव त्रिदिवशिवलक्ष्मीर्भजति तम् ॥ १ ॥ यन्निर्वर्त्तितकीर्त्तिधर्मनिधनं सर्वाऽऽगसां साधनं, प्रोन्मी-
लद्वधबन्धनं विरचितक्लिष्टाशयोद्बोधनम् । दौर्गत्यैकनिबन्धनं कृतसुगत्याश्लेषसंरोधनं, प्रोत्सर्पत्प्रधनं जिघृक्षति न तद्धी-
मानदत्तं धनम् ॥ २ ॥ वरं वह्निशिखाः पीताः, सर्पास्यं चुम्बितं वरम् । वरं हालाहलं लीढं, परस्वहरणं न तु ॥ ३ ॥
चौरश्चौरापको मन्त्री, भेदज्ञः काणकक्रयी । अन्नदः स्थानदश्चेति, चौरः सप्तविधः स्मृतः ॥ ४ ॥ हरिऊण य परदव्वं
पूअं जो करइ जिणवरिंदाणं । दहिऊण चंदणतरुं कुणई अंगारवाणिज्जं ॥ ५ ॥

१ जननी जन्मोत्पत्तिः पश्चिमनिद्रा सुभाषिता गोष्ठी । मनइष्टो मनुष्यः पञ्चापि दुःखेन मुच्यन्ते ॥ ६ ॥ यदवसरे न जातं दानं विनयः सुभाषितं वचनम् । पश्चात् गतकालेनावसरहितेन किं तेन? ॥७॥ २ हृत्वा च परधनं पूजां यः करोति जिनवरेन्द्राणाम् । दग्ध्वा चन्दनतरुं करोत्यङ्गारवाणिज्यम् ॥ ५ ॥

सर्वे तुष्यन्ति जन्तवः । तस्मात्तदेव कर्त्तव्यं, वचने किं दरिद्रता? ॥ १६ ॥ कोऽतिभारः समर्थानां?, किं दूरं व्यवसायिनाम्?। को विदेशः सविद्यानां?, कः परः प्रियवादिनाम्? ॥ १७ ॥ प्रस्तुतं हेतुसंयुक्तं, शुद्धं साधुजनप्रियम् । यो वक्तुं नैव जानाति, स जिह्वां किं न रक्षति? ॥ १८ ॥ प्रस्तावसदृशं वाक्यं, सद्भावसदृशं प्रियम् । आत्मशक्तिसमं कोपं, यो जानाति स पण्डितः ॥ १९ ॥ युक्तमेव कृतं मौनं, काले प्रावृषि कोकिलैः । वक्तारो दर्दुरा यत्र, तत्र नष्टं सुभाषितैः ॥ २० ॥ धर्मध्वंसे क्रियालोपे, स्वसिद्धान्तार्थविप्लवे । अपृष्टेनापि शक्तेन, वक्तव्यं तन्निषेधकम् ॥ २१ ॥ एकापि कला सुकला वचनकला किं कलाभिरपराभिः?। वरमेका कामगवी जरद्गवीनां न लक्षमपि ॥ २२ ॥ केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्वला, न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्द्धजाः । वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते, क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ २३ ॥



## सुभाषितसूक्तानि ७५



*मांसखण्डं न सा जिह्वा, या न वेत्ति सुभाषितम् । नूनं काकभयादेषा, दन्तान्तर्विनिवेशिता* ॥ १ ॥ पृथिव्यां त्रीणि रत्नानि, जलमन्नं सुभाषितम् । मूढैः पाषाणखण्डेषु, रत्नसंज्ञा निवेशिता ॥ २ ॥ यस्य वक्त्रकुहरे सुभाषितं, नास्ति नाप्यवसरे प्रजल्पति । आगतः सदसि धीमतामसौ, लेप्यनिर्मित इवावभासते ॥ ३ ॥ सुभाषितेन गीतेन, युवतीनां च लीलया । मनो न भिद्यते यस्य, स योगी ह्यथवा पशुः ॥ ४ ॥ धर्मो यशो नयो दाक्ष्यं, मनोहारि सुभाषितम् । इत्यादि-

गुणरत्नानां, संमर्दो नापसीदति ॥ ५ ॥ जणणी जम्मुप्पत्ती पच्छिमनिद्दा सुभासिअं गुट्ठी । मणइट्ठं माणुस्सं पंचवि
गुणरोहिं मुयंति ॥ ६ ॥ जं अवसरे न हूअं दाणं विणओ सुभासिअं वयणं । पच्छा गयकालेणं अवसररहिएण किं
तेण? ॥७॥ पुरिसह अणइ मुणिवर जइ मुअ चूडओ होइ । अच्छइ खूणइ वइठडओ वत्त न पुच्छइ कोइ ॥ ८ ॥ वोलं-
वइ सिरउं घोडिआइ वयणइ इत्तिअ सार । जइ ओल्हाणि फुंकीइ तओ मुहु भरिअइ छार ॥ ९ ॥

## अदत्तसंबन्धिसूक्तानि ७६

अदत्तं नादत्ते कृतसुकृतकामः किमपि यः, शुभश्रेणिस्तस्मिन् वसति कलहंसीव कमले । विपत्तस्माद्दूरं व्रजति रजनी-
वाम्बरमणेर्विनीतं विद्येव त्रिदिवशिवलक्ष्मीर्भजति तम् ॥ १ ॥ यन्निर्वर्तितकीर्तिधर्मनिधनं सर्वाऽऽगसां साधनं, प्रोन्मी-
लद्वधबन्धनं विरचितक्लिष्टाशयोद्बोधनम् । दौर्गत्यैकनिबन्धनं कृतसुगत्याश्लेषसंरोधनं, प्रोत्सर्पत्प्रधनं जिघृक्षति न तद्धी-
मानदत्तं धनम् ॥ २ ॥ वरं वह्निशिखाः पीताः, सर्पास्यं चुम्बितं वरम् । वरं हालाहलं लीढं, परस्वहरणं न तु ॥ ३ ॥
चौरश्चौरापको मन्त्री, भेदज्ञः काणकक्रयी । अन्नदः स्थानदश्चेति, चौरः सप्तविधः स्मृतः ॥ ४ ॥ हरिऊण य परदव्वं
पूअं जो करइ जिणवरिंदाणं । दहिऊण चंदणतरुं कुणई अंगारवाणिज्जं ॥ ५ ॥

---

१ जननी जन्मोत्पत्तिः पश्चिमनिद्रा सुभाषिता गोष्ठी । मनइष्टो मनुष्यः पञ्चापि दुःखेन मुच्यन्ते ॥ ६ ॥ यदवसरे न जातं दानं विनयः सुभाषितं
वचनम् । पश्चाद् गतकालेनावसररहितेन किं तेन? ॥७॥ २ हृत्वा च परधनं पूजां यः करोति जिनवरेन्द्राणाम् । दग्ध्वा चन्दनतरुं करोत्यङ्गारवाणिज्यम् ॥ ५ ॥

## सन्तोषसंबन्धिसूक्तानि ७७

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते, शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति । कन्दैः फलैर्मुनिवरा गमयन्ति कालं, संतोष एव पुरुषस्य परं निधानम् ॥ १ ॥ इप्सितं मनसा सर्वं, कस्य संपद्यते सुखम्? । दैवायत्तं जगत्सर्वं, तस्मात्संतोषमाश्रयेत् ॥ २ ॥ निवृत्तायां धनेच्छायां, पार्श्वस्था एव संपदः । अङ्गुल्या पिहिते कर्णे, शब्दाद्वैतं विजृम्भितम् ॥ ३ ॥ राजानं तृणतुल्यमेव मनुते शक्रोऽपि नैवादरो, वित्तोपार्जनरक्षणव्ययकृताः प्राप्नोति नो वेदनाः । संसारान्तरवर्त्त्यपीह लभते शं मुक्तवन्निर्भयः, संतोषात्पुरुषोऽमृतत्वमचिराद्यायात्सुरेन्द्रार्चितः ॥ ४ ॥ जातः कल्पतरुः पुरः सुरगवी तेषां प्रविष्टा गृहं, चिन्तारत्नमुपस्थितं करतले प्राप्तो निधिः सन्निधिम् । विश्वं वश्यमवश्यमेव सुलभाः स्वर्गापवर्गश्रियो, ये संतोषमशेषदोषदहनध्वंसाम्बुदं बिभ्रते ॥ ५ ॥ प्राप्ताः श्रियः सकलकामदुघास्ततः किं?, संप्रीणिताः प्रणयिनो विभवैस्ततः किम्? । दत्तं पदं शिरसि विद्विषतां ततः किं?, कल्पं स्थितं तनुभृतां तनुभिस्ततः किम्? ॥ ६ ॥ निरीहस्य निधानानि, प्रकाशयति काश्यपी । अङ्गोपाङ्गानि डिम्भाय, न गोपयति कामिनी ॥ ७ ॥ उपर्युपरि पश्यन्तः, सर्व एव दरिद्रति । अधोऽधः पश्यतः कस्य, महिमा नोपजायते ॥ ८ ॥ अनुचितफलाभिलाषी दैवेन निवार्यते बलात्पुरुषः । द्राक्षाविपाकसमये मुखरोगो भवति काकानाम् ॥ ९ ॥

७६ अदत्ते श्लो. ५
७७ संतोषे श्लो. ९

## परिग्रहसंबन्धिसूक्तानि ७८

क्षेत्रं वास्तु धनं धान्यं, कुप्यं शयनमासनम् । द्विपदः पशवो भाण्डा, बाह्या दश परिग्रहाः ॥ १ ॥ दायादाः स्पृहयन्ति तस्करगणा मुष्णन्ति भूमीभुजो, गृह्णन्ति च्छलमाकलय्य हुतभुग्भस्मीकरोति क्षणात् । अम्भः प्लावयति क्षितौ विनिहितं यक्षा हरन्ते हठात्, दुर्वृत्तास्तनया नयन्ति निधनं धिग्बह्वधीनं धनम् ॥ २ ॥ अर्थानामर्जने दुःखमर्जितानां च रक्षणे । आये दुःखं व्यये दुःखं, धिगर्थं दुःखभाजनम् ॥ ३ ॥ क्लेशाय विस्तराः सर्वे, संक्षेपास्तु सुखावहाः । परार्थं विस्तराः सर्वे, त्यागमात्महितं विदुः ॥ ४ ॥ यथा यथा महत्तन्त्रं, विस्तरश्च यथा यथा । तथा तथा महद्दुःखं, सुखं च न तथा तथा ॥ ५ ॥ अनन्तैः पार्थिवैर्भुक्ता, कालेनोर्वी धनानि च । मेलितानि परं त्यक्त्वा, गतास्ते स्वकृतैः सह ॥ ६ ॥ गोशतादपि गोक्षीरं, मानं मूढशतादपि । मन्दिरे मञ्चकस्थानं, शेषाः परपरिग्रहाः ॥ ७ ॥ निद्राच्छेदसखेदबान्धवजने सोद्वेगवैद्योज्झितः, पथ्यक्वाथकथार्दितः परिजनैस्तन्द्रीभवन् क्षोभतः । भग्नस्वास्थ्यमनोरथप्रियतमाबद्धव्यथापादद्वयः, पर्यन्ते विवशः करोति पुरुषः किं शल्यतुल्यैर्धनैः ? ॥ ८ ॥ ब्रह्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं, यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः । न प्राप्तानि पुरा न सम्प्रति न च प्राप्तौ दृढप्रत्ययो, वाञ्छामात्रपरिग्रहाण्यपि परं त्यक्तुं न तानि क्षमाः ॥ ९ ॥ क्रीडोद्यानमविद्यानां, वारिधिर्व्यसनाम्भसाम् । कन्दस्तृष्णामहावल्लेरेक एव परिग्रहः ॥ १० ॥ प्रत्यर्थी प्रशमस्य मित्रमधृतेर्मोहस्य विश्रामभूः, पापानां खनिरापदां पदमसद्ध्यानस्य लीलावनम् । व्याक्षेपस्य निधिर्मदस्य सचिवः शोकस्य हेतुः कलेः, केलीवेश्म परिग्रहः परिहृतेर्योग्यो विविक्तात्मनाम् ॥ ११ ॥

## लोभसंबन्धिसूक्तानि ७९

लोभमूलानि पापानि, रसमूलाश्च व्याधयः । स्नेहमूलानि दुःखानि, त्रीणि त्यक्त्वा सुखी भव ॥ १ ॥ जहा लाहो तहा लोहो लाहा लोहो पवड्ढइ । दोमासकणयकज्जं कोडीए वि न निट्ठियं ॥ २ ॥ महीयसापि लाभेन, लोभो न परिभूयते । मात्रासमधिकः पुत्र, मात्राहीनेन जायते? (जीयते) ॥ ३ ॥ लोभो मुक्तो यदि तदा, तपोभिरफलैरलम् । लोभस्त्यक्तो न चेत्तर्हि, तपोभिरफलैरलम् ॥ ४ ॥ निःशेषधर्मवनदाहविजृम्भमाणदुःखौघभस्मनि विसर्पदकीर्त्तिधूमे । बाढं धनेन्धनसमागमदीप्यमाने, लोभानले शलभतां लभते गुणौघः ॥ ५ ॥ यद्दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं, गाहन्ते गहनं समुद्रमतुलक्लेशां कृषिं कुर्वते । सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं, सर्पन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥ ६ ॥ नीचस्यापि चिरं चटूनि रचयन्त्यायान्ति नीचैर्नतिं, शत्रोरप्यगुणात्मनोऽपि विदधत्युच्चैर्गुणोत्कीर्त्तनम् । निर्वेदं न विदन्ति किंचिदकृतज्ञस्यापि सेवाकृते, कष्टं किं न मनस्विनोऽपि मनुजाः कुर्वन्ति वित्तार्थिनः? ॥ ७ ॥ मूलं मोहविषद्रुमस्य सुकृताम्भोराशिकुम्भोद्भवः, क्रोधाग्नेररणिः प्रतापतरणिप्रच्छादने तोयदः । क्रीडासद्म कलेर्विवेकशशिनः स्वर्भाणुरापन्नदीसिन्धुः कीर्त्तिलताकलापकलभो लोभः पराभूयताम् ॥ ८ ॥

## तृष्णासंबन्धिसूक्तानि ८०

मुखं वलिभिराक्रान्तं, पलितैरङ्कितं शिरः । गात्राणि शिथिलायन्ते, तृष्णैका तरुणायते ॥ १ ॥ दन्तैरुच्चलितं धिया

तरलितं पाण्यंह्रिणा कम्पितं, दृग्भ्यां कुड्मलितं बलेन गलितं रूपश्रिया प्रोषितम् । प्राप्तायां यमभूपतेरिह महाधाट्यां धरायामियं, तृष्णा केवलमेकिकैव सुभटी हृत्पत्तने नृत्यति ॥ २ ॥ अङ्गं गलितं पलितं मुण्डं, दशनविहीनं जातं तुण्डम्। वृद्धो याति गृहीत्वा दण्डं, तदपि न मुञ्चत्याशापिण्डम् ॥ ३ ॥ उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो, निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संसेविताः । मन्त्राराधनतत्परेण मनसा नीताः श्मशाने क्षपाः, प्राप्तः काणवराट-कोऽपि न मया तृष्णे! सकामा भव ॥ ४ ॥ आराध्य भूपतिमवाप्य ततो धनानि, भोक्ष्यामहे वयममी सततं सुखानि। इत्याशया बत विमोहितमानसानां, कालः प्रयाति मरणावधिरेव पुंसाम् ॥ ५ ॥ रात्रिर्गमिष्यति भविष्यति सुप्रभातं, भास्वानुदेष्यति हसिष्यति पङ्कजं च । इत्थं विचिन्तयति कोशगते द्विरेफे, हा मूलतः कमलिनीं गज उज्जहार ॥ ६ ॥ यौवनं जरया ग्रस्तं, शरीरं व्याधिपीडितम् । मृत्युराकाङ्क्षति प्राणान्, तृष्णैका निरुपद्रवा ॥ ७ ॥ शरीरं श्लथते नाशा, रूपं याति न पापधीः । जरा स्फुरति न ज्ञानं, धिक् स्वरूपं शरीरिणाम् ॥ ८ ॥ धण कारणि लिइं गोझु झूझ करइं फिर पुणवसिउं । धणहीणा दिइं मोझु रोझ हुआ दह दिसि भमइं ॥ ९ ॥ तृष्णा खानिरगाधेयं, दुष्पूरा केन पूर्यते? । या महद्भिरपि क्षिप्तैः, पूरणैरेव खन्यते॥ १० ॥ आकाङ्क्षितानि जन्तूनां, संपद्यन्ते यथा यथा । तथा तथा विशेषाप्तौ, मनो भवति दुःखितम् ॥ ११ ॥ मनोरथरथारूढं, युक्तमिन्द्रियवाजिभिः । भ्राम्यतीदं जगत्सर्वं, तृष्णासारथिनोदितम् ॥ १२ ॥ त्यागार्थं यस्य वित्तेहा, तस्यानीहा गरीयसी । प्रक्षालनाद्धि पङ्कस्य, दूरादस्पर्शनं वरम् ॥ १३ ॥ धनेषु जीवितव्येषु, स्त्रीषु चाहारकर्मसु । अतृप्ताः प्राणिनः सर्वे, याता यास्यन्ति यान्ति च ॥ १४ ॥ भव्यो! दुःखमयः सोऽयं, किमाभाति

भवस्तव?। यत्रेच्छातुलितं दुःखं, लभ्यते न पुनर्मुधा ॥ १५ ॥ बिन्दुनाऽप्यधिका चिन्ता, चितायां इति मे मतिः । चिता दहति निर्जीवं, चिन्ता जीवन्तमप्यहो ॥ १६ ॥ तृष्णादेवि! नमस्तुभ्यं, का कथेतरमानवे । अनन्तनाम यद्रूपं, तत्त्वया वामनीकृतम् ॥ १७ ॥ आशैव राक्षसी पुंसामाशैव विषमञ्जरी । आशैव जीर्णमदिरा, धिगाशा सर्वदोषभूः ॥ १८ ॥ ते धन्याः पुण्यभाजस्ते, तैस्तीर्णः क्लेशसागरः । जगत्संमोहजननी, यैराशाऽऽशीविषी जिता ॥ १९ ॥ कालो न यातो वयमेव याता, भोगा न भुक्ता वयमेव भुक्ताः । तृष्णा न जीर्णा वयमेव जीर्णास्तपो न तप्तं वयमेव तप्ताः ॥ २० ॥

## जरासंबन्धिसूक्तानि ८१

मनसि जरसाभिभूता जायन्ते यौवनेऽपि विद्वांसः । मन्दधियः पुनरितरे भवन्ति वृद्धत्वयोगेऽपि ॥ १ ॥ आरोहन्ती शिरः स्वान्तादौन्नत्यं तनुते जरा । शिरसः स्वान्तमायान्ती, दिशते नीचतां पुनः ॥ २ ॥ यातं यौवनमधुना वनमधुना शरण(मेक)मस्माकम् । स्फुरदुरुहारमणीनां हा रमणीनां गतः कालः ॥ ३ ॥ अलङ्करोति हि जरा, राजामात्यभिषग्वरान् । विडम्बयति पण्यस्त्रीमल्लगायकसेवकान् ॥ ४ ॥ वदनं दशनविहीनं वाचो न परिस्फुटा गता शक्तिः । अव्यक्तेन्द्रियशक्तिः पुनरपि बाल्यं कृतं जरया ॥ ५ ॥ गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गता, दृष्टिर्भ्रश्यति रूपमेव ह्रसते वक्त्रं च लालायते । वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते, हा कष्टं जरयाऽभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥ ६ ॥ वृद्धस्य मृतभार्यस्य, पुत्राधीनधनस्य च । स्नुषावचनदग्धस्य, जीवितान्मरणं वरम् ॥ ७ ॥ यममिव गृहीतदण्डं हरिमिव सगदं शशाङ्कमिव वक्रम् । शम्भुमिव विरूपाक्षं जरा करोत्यकृतपुण्यमपि ॥ ८ ॥ पट्ट रटति प-

ऽलिवद्धो मस्तकमाधाय सर्वलोकस्य । परिभवति जरामरणं कुरु धर्मं विरम पापेभ्यः ॥ ९ ॥ वृद्धत्वानलदग्धस्य, सा-
र्यायनवस्तुनः । दृश्यते देहगेहेषु, भस्मेव पलितच्छलात् ॥ १० ॥ वीक्ष्यते पलितश्रेणिर्नैव वृद्धस्य मूर्द्धनि । धूर्तैव जात-
जन्मेति, किंतु भस्म विधिर्न्यधात् ॥ ११ ॥ पहुतउं अमेगाणु जुव्वण ऊपरि जरा तणउ । दंतह हउ अजाणु पहिलउं
नाठा पगरुरी ॥ १२ ॥ पलितैः पाण्डुरीभूता, हंसा जाता वयं किल । पश्य लोकैः कृताः काकास्तदिदं कस्य कथ्यते?
॥ १३ ॥ उभव काइं अयाणउ आवइ वाहरमिली । इसु संपइ अनइ प्राण जवतु करंता जाइसिं ॥ १४ ॥ इयत्यामपि
सामग्र्यां, सुकृतं न कृतं त्वया । इतीव कुपितो दन्तानंतकः पातयत्यलम् ॥ १५ ॥

## लक्ष्मीवत्संबन्धिसूक्तानि ८२

लक्ष्मीवन्तो न जानन्ति, प्रायेण परवेदनाम् । शेषे धराभराक्रान्ते, शेते लक्ष्मीपतिः सुखम् ॥ १ ॥ भक्ते द्वेषो जडे
प्रीतिररुचिर्गुरुलङ्घनम् । मुखे च कटुता नित्यं, धनिनां ज्वरिणामिव ॥ २ ॥ अन्धा एव धनान्धाः स्युरिति सत्यं तथा
हि ते । अन्योक्ताध्वना गच्छन्त्यन्यहस्तावलम्बिनः ॥ ३ ॥ लक्ष्मि! क्षमस्व सहनीयमिदं दुरुक्तमन्धा भवन्ति पुरुषा-
स्तव दर्शनेन । नो चेत्कथं कथय पन्नगभोगपल्ये, नारायणः स्वपिति पङ्कजपत्रनेत्रः ॥ ४ ॥ मदिरामदमत्तोऽपि, किं शृ-
णोति च पश्यति । राजश्रीमदमत्तस्तु, न शृणोति न पश्यति ॥ ५ ॥ अहो बत विचित्राणि, चरित्राणि महात्मनाम् ।
लक्ष्मीं तृणाय मन्यन्ते, तद्भरेण नमन्ति च ॥ ६ ॥ आलिङ्गिताः परैर्यान्ति, प्रस्खलन्ति पदे पदे । अव्यक्तानि च भा-
षन्ते, धनिनो मद्यपा इव ॥ ७ ॥ अवंशपतितो राजा, मूर्खपुत्रो हि पण्डितः । अधनेन धनं प्राप्तं, तृणवन्मन्यते जगत्

॥ ८ ॥ एहि गच्छ पुरस्तिष्ठ, वद मौनं समाचर । एवमाशाग्रहग्रस्तैः, क्रीडन्ति धनिनोऽर्थिभिः ॥ ९ ॥ मत्वाऽऽत्मनो बन्धनिबन्धनानि, पुण्यानि पुंसां कमला किलासौ । तद्ध्वंसनायेव धनेश्वराणां, दत्ते मतिं दुर्बलपीडनाय ॥ १० ॥ निर्दयत्वमहङ्कारस्तृष्णा कर्कशभाषणम् । नीचपात्रप्रियत्वं च, पञ्च श्रीसहचारिणः ॥ ११ ॥ भोगान् भोगाङ्गवीचिविमलितशिरसः प्राप्य शम्भोः प्रसादान्मोहान्मोहानभिज्ञाः क्वचिदपि भवत प्राणिनो दर्पभाजः । यस्माद्यः सार्त्तविप्रप्रणततनुतपदः सर्वसंपन्नभोगो, भास्वान् भाः स्वाङ्गभूता अपि तु परिहरन्नस्तमेषः प्रयाति ॥ १२ ॥

## लक्ष्मीसंबन्धिसूक्तानि ८३

पद्मं पद्मा परित्यज्य, स्वावासमपि या व्रजेत् । दिनान्ते सा कथं नाम, परस्थानेषु सुस्थिरा ? ॥ १ ॥ गुणिनां गुणमालोक्य, निजबन्धनशङ्कया । राजंलक्ष्मीः कुरङ्गीव, दूरं दूरं पलायते ॥ २ ॥ धीवराशङ्किनी नित्यं, प्रायेण श्रीर्जडाशया । गुणिभ्यो बन्धनत्रस्ता, शफरीव पलायते ॥ ३ ॥ लक्ष्मीर्लक्षणहीनस्य, जातिहीनस्य भारती । कुपात्रे रमते नारी, गिरौ वर्षति माधवः ॥ ४ ॥ कुपात्रे रमते नारी, गिरौ वर्षति माधवः । नीचमाश्रयते लक्ष्मीः, प्राज्ञः प्रायेण निर्धनः ॥ ५ ॥ निम्नं गच्छति निम्नगेव नितरां निद्रेव विष्कम्भते, चैतन्यं मदिरेव पुष्यति मदं धूम्येव दत्तेऽन्धतां । चापल्यं चपलेव चुम्बति दवज्वालेव तृष्णां नयत्युल्लासं कुलटाङ्गनेव कमला स्वैरं परिभ्राम्यति ॥ ६ ॥ तावन्माता पिता चैव, तावत्सर्वेऽपि बान्धवाः । तावद्भार्या सदा हृष्टा, यावल्लक्ष्मीः स्थिरा गृहे ॥ ७ ॥ तावद्गुणगणकलितस्तावन्निजगोत्रमण्डनं परमम् । यावत्करिकर्णचला कमला न त्यजति सत्पुरुषम् ॥ ८ ॥ श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरिता-

८२ लक्ष्मीवति १२
८३ लक्ष्म्यां २३

नाम् । उपदिशति कामिनीनां, यौवनमद एव ललितानि ॥ ९ ॥ यस्यास्ति वित्तं स नरः कुलीनः, स पण्डितः स श्रुत-
वान् गुणज्ञः । स एव वक्ता स च दर्शनीयः, सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ १० ॥ जाई रूवं विज्जा तिण्णवि निव-
डंतु कंदरं विवरं । अत्थुच्चिअ परिवड्ढउ जेण गुणा पायडा हुंति ॥ ११ ॥ समाश्रयन्ति सर्वेऽपि, प्रायेण विभवं गुणाः ।
गुणश्चटति चापेऽपि, कोटिद्वयसमन्विते ॥ १२ ॥ मातृकावर्णपाठेऽपि, शकारो वक्रकन्धरः । नूनं जनः समोऽप्येष,
टपसंमुखमीक्षते ॥ १३ ॥ वन्द्यते यदवन्द्योऽपि, यदपूज्योऽपि पूज्यते । गम्यते यदगम्योऽपि, स प्रभावो धनस्य तु
॥ १४ ॥ विद्यावृद्धास्तपोवृद्धा, ये च वृद्धा बहुश्रुताः । सर्वे ते धनवृद्धस्य, द्वारे तिष्ठन्ति किङ्कराः ॥ १५ ॥ वारांराशि-
रसौ प्रसूय भवतीं रत्नाकरत्वं गतो, लक्ष्मि! त्वत्पतिभावमेत्य मुरजिज्जातस्त्रिलोकीपतिः । कन्दर्पो जनचित्तरञ्जन इति
त्वन्नन्दनत्वादभूत्, सर्वत्र त्वदनुग्रहप्रणयिनी मन्ये महत्त्वस्थितिः ॥ १६ ॥ सर्वासामपि नारीणां, मध्ये श्रीः सुभगा
लघु । स्पृहयन्ति महान्तोऽपि, यां स्वेच्छाचारिणीमपि ॥ १७ ॥ स्त्रैणभूषणमणेः कमलाया, यल्लपन्ति चपलेत्यपवादम् ।
दूषणं जलनिधेर्जनिकर्त्तुर्यत्पुराणपुरुषाय ददौ ताम् ॥ १८ ॥ नयेन नेता विनयेन शिष्यः, शीलेन लिङ्गी प्रशमेन साधुः ।
जीवेन देहः सुकृतेन देही, वित्तेन गेही रहितो न किञ्चित् ॥ १९ ॥ वरं वनं व्याघ्रगणैर्निषेवितं, द्रुमालये पत्रफलैश्च
भोजनम् । तृणैश्च शय्या वसनं च वल्कलं, न बन्धुमध्ये धनहीनजीवितम् ॥ २० ॥ गुरवो यत्र पूज्यन्ते, वित्तं यत्र
नयार्जितम् । अदन्तकलहो यत्र, तत्र शक! वसाम्यहम् ॥ २१ ॥ प्रीतिर्यत्र निजैर्गेहे, देहसत्त्वं सुसंभृतम् । पुण्यमात्म-

१ जातिः रूपं विद्या त्रीण्यपि निपतन्तु कन्दरे पाताले । अर्थ एव परिवर्धतां येन गुणाः प्रकटा भवन्ति ॥ ११ ॥

न्यगण्यं च, तत्र तिष्ठाम्यहं सदा ॥ २२ ॥ द्यूतपोपी निजद्वेषी, धातुर्वादी सदालसः । आयव्ययस्थानालोची, तत्र तिष्ठाम्यहं सदा ॥ २३ ॥

## श्रीदारिद्र्योर्विवादसूक्तानि ८४

शिरस्सु पुष्पं चरणौ सुपूजितौ, निजाङ्गनासेवनमल्पभोजनम् । अनग्नशायित्वमपर्वमैथुनं, चिरप्रणष्टां श्रियमानयन्त्यलम् ॥ १ ॥ दानमौचित्यविज्ञानं, सत्पात्राणां परिग्रहः । सुकृतं सुप्रभुत्वं च, पञ्च प्रतिभुवः श्रियः ॥ २ ॥ नालस्यप्रसरो जडेष्वपि कृतावासस्य कोशे रुचिर्दण्डे कर्कशता मुखे च मृदुता मित्रे महान् प्रश्रयः । आमूलं च गुणग्रहव्यसनिता द्वेपश्च दोपाकरे, यस्यैपा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः ॥ ३ ॥ किं तया क्रियते लक्ष्म्या!, विदेशगमनेन या । अरयो यां न पश्यन्ति, बन्धुभिर्या न भुज्यते ॥ ४ ॥ किं तया क्रियते लक्ष्म्या?, या वधूरिव केवला । या च वेश्येव सा मान्या, पथिकैरपि भुज्यते ॥ ५ ॥ सत्यैकभूपणा वाणी, विद्या विरतिभूपणा । धर्मैकभूपणा मूर्तिर्लक्ष्मीः सदानभूपणा ॥ ६ ॥ सा लक्ष्मीर्या धर्मकर्मोपयुक्ता, सा लक्ष्मीर्या बन्धुवर्गोपभोग्या । सा लक्ष्मीर्या स्वाङ्गभोगप्रसङ्गा, याऽन्या मान्या सा नु लक्ष्मीरलक्ष्मीः ॥ ७ ॥ उत्पादिता स्वयमियं यदि तत्तनूजा, तातेन वा यदि तदा भगिनी खलु श्रीः । यद्यन्यसंगसवती च तदा परस्त्री, तत्त्यागबद्धमनसः सुधियस्ततोऽमी ॥ ८ ॥ लक्ष्मीः सर्पति नीचमर्णवपयःसङ्गादिवाम्भोजिनी, संसर्गादिव कण्टकाकुलपदा न क्वापि धत्ते पदम् । चैतन्यं विपसंनिधेरिव नृणामुज्जासयत्यञ्जसा, धर्मस्थाननियोजनेन गुणिभिर्ग्राह्यं तदस्याः फलम् ॥ ९ ॥ काचिद्वालुकवन्महीतलगता मूलच्छिदाकारणं, द्रव्योपार्जनपु-

रिवादपि पिकटा काचित्तु चलितप्रभा। काचिच्छ्रीः कदलीव भोगसुभगा सत्पुण्यबीजच्युता, सर्वाङ्गं सुभगा रसाल-
र्लिकावल्लुव्वर्शआश्रिता ॥ १० ॥ निर्द्रव्याणामयं व्ययविभागः—पादमायान्निधौ कुर्यात्पादं वित्ताय साधयेत्।
धर्मोपभोगयोः पादं, पादं भर्तव्यपोषणे ॥ ११ ॥ सद्रव्याणां त्वयम्—आयादर्द्धं नियुञ्जीत, धर्मे यद्वाऽधिकं ततः।
शेषेण शेषं कुर्वीत, यत्नतस्तुच्छमैहिकम् ॥ १२ ॥ आयव्ययमनालोच्य, यस्तु वैश्रमणायते। अचिरेणापि कालेन, स तु
ं श्रमणायते ॥ १३ ॥ त्यागो गुणो वित्तवतां, वित्तं त्यागवतां गुणः। परस्परवियुक्तौ तु, वित्तत्यागौ विडम्बना ॥१४॥

## कृपणसंबन्धिसूक्तानि ८५

संवर्द्धनपरः प्राप, समुद्रोऽपि रसातलम्। दाता तु जलदः पश्य, भुवनोपरि गर्जति ॥ १ ॥ गौरवं प्राप्यते दानाद्-
व्यय न तु संग्रहात्। स्थितिरुच्चैः पयोदानां, पयोधीनामधः पुनः ॥ २ ॥ अधः क्षिपन्ति कृपणा, वित्तं तत्र यियासवः।
सन्तस्तु गुरुपत्वादौ, समुच्चैःपदकाङ्क्षिणः ॥ ३ ॥ वनकुसुमं कृपणश्रीः कूपच्छाया सुरङ्गधूली च। तत्रैव यान्ति विलयं
मनोरथा भाग्यहीनानाम् ॥ ४ ॥ शरणं किं प्रपन्नानि, विषवन्मारयन्ति किम्?। न दीयन्ते न भुज्यन्ते, कृपणेन ध-
नानि यत् ॥ ५ ॥ न दातुं नोपभोक्तुं वा, शक्नोति कृपणः श्रियम्। किंतु स्पृशति हस्तेन, नपुंसक इव स्त्रियम् ॥ ६ ॥
प्रतिकूलो विधिस्तेषां, निर्धना ये विनिर्मिताः। प्रतिकूलतमस्तेषु, सतोऽर्थान् ददते न ये ॥ ७ ॥ जणु आवतउ म वारि,
पुत्तहिं उव्वइ एहु दिणु। कोइ न चडसिंई वारि ओहट्ट लेसिइ जइ विहडु ॥ ८ ॥ परवित्तव्ययं वीक्ष्य, खिद्यन्ते नीच-

आतपः । यवासको न किं शुष्याद्?, वारि व्ययति वारिदे ॥ ९ ॥ [1]उवभुंजिउं न याणइ रिद्धिं पत्तोवि पुण्णपरिहीणो । विमलेवि जले तिसिओ, जीहाए मंडलो लिहइ ॥ १० ॥ यो नात्मने न गुरवे न च बान्धवाय, दीने दयां न कुरुते न च भृत्यवर्गे । किं तस्य जीवितफलं हि मनुष्यलोके?, काकोऽपि जीवति चिरं च सुखं च भुङ्क्ते ॥ ११ ॥ प्रियः प्रजानां दातैव, न पुनर्द्रविणेश्वरः । आगच्छन् वाञ्छयते लोकैर्वारिदो न तु वारिधिः ॥ १२ ॥ अदातरि समृद्धेऽपि किं कुर्युरुपजीविनः? । किंशुके किं शुकः कुर्यात्फलितेऽपि बुभुक्षितः ॥ १३ ॥ कूपे पयसि लघीयसि तापेन करः प्रसारितः करिणा । सोऽपि न पयसा लिप्तो, लाघवमात्मा परं नीतः ॥ १४ ॥ समृद्धैरपि नो नीचैश्चार्थसंपद्वितीर्यते । रत्नाकरेण नैकापि, जन्यते हि तरङ्गिणी ॥ १५ ॥ [2]दाणेण विणा न साहू न हुंति साहूहिं विरहिअं तित्थं । दाणं दिंतेण तओ तित्थुद्धारो कओ होइ ॥ १६ ॥ वीतरागेषु यद्दत्तं, यच्च दत्तं तपस्विषु । सागरस्य भवेत्संख्या, तस्य संख्या न विद्यते ॥ १७ ॥ यस्य कोष्ठगतं ह्यन्नं, ब्रह्मचर्येण जीर्यते । स तारयति दातारमात्मानं च न संशयः ॥ १८ ॥ संपूर्णोऽपि सुवृत्तोऽपि, स्याददानादधो घटः । लघुः कुब्जोऽपि काणोऽपि, दानादुपरि कर्करः ॥ १९ ॥ रत्नाकर इति चेतसि धृत्वा किं मूर्ख! धावसि वृथा त्वम्?। शमयति न तृषं जलनिधिरपि तटमासेदुपामेषः ॥ २० ॥ ऐश्वर्यतिमिरे चक्षुः, पश्यतोऽपि न पश्यति । द्रुतं निर्मलतां याति, दारिद्र्याञ्जनभेषजात् ॥ २१ ॥ वितर वारिद! वारि तृषातुरे, त्वरितमुद्यतचातकया-



[1] उपभोक्तुं न जानाति ऋद्धिं प्राप्तोऽपि पुण्यपरिहीणः । विमलेऽपि जले तृषितः जिह्वया मण्डलो (भषक.) लेढि ॥ १० ॥ [2] दानेन विना न साधुः न भवति साधुभिर्विरहितं तीर्थम् । दानं ददता ततस्तीर्थोद्धारः कृतो भवति ॥ १६ ॥

घर्के । मरुति विस्फुरति क्षणमन्यथा, क च भवान् क पयः क स चातकः? ॥ २२ ॥ धनिनोऽप्यदानविभवा गण्यन्ते
धुरि महादरिद्राणाम् । हन्ति न यतः पिपासामतः समुद्रोऽपि मरुरेव ॥ २३ ॥ अस्ति जलं जलराशौ क्षारं तत्किं वि-
पीयते तेन? । लघुरपि वरं स कूपो, यत्राकण्ठं जनः पिबति ॥ २४ ॥ अनया रत्नसमृद्ध्या सागर! किं स्फुरसि बहुलल-
हरीभिः । तव यदम्भो वराम्भो वहन्ति वर्षास्वपि जलानि ॥ २५ ॥ अतिसंचयकर्तॄणां, वित्तमन्यस्य कारणम् । अन्यैः
सञ्चीयते यत्नात्, मध्वन्यैः परिभुज्यते ॥ २६ ॥ कदर्योपात्तवित्तानां, भोगो भाग्यवतां भवेत् । दन्ता दलन्ति कष्टेन,
जिह्वा गिलति लीलया ॥ २७ ॥ मृत्युः शरीरगोप्तारं, रक्षितारं धनं धरा । दुश्चारिणीव हसति, पितरं पुत्रवत्सलम्
॥ २८ ॥ प्राप्तानपि न लभन्ते भोक्तुं भोगान् स्वकर्मभिः कृपणाः । किल भवति चञ्चुपाको द्राक्षापाकेषु काककुले
॥ २९ ॥ गाढतरबद्धमुष्टेः, कोशनिषण्णस्य सहजमलिनस्य । कृपणस्य कृपाणस्य च, केवलमाकारतो भेदः ॥ ३० ॥ कृप-
णेन समो दाता, न भूतो न भविष्यति । अस्पृशन्नेव वित्तानि, यः परेभ्यः प्रयच्छति ॥ ३१ ॥ अधुना धनं न यच्छति
यदि तुच्छस्तावदेव स किमस्तु? । दास्यति काले कृपणः प्राणानप्यन्तकातिथये ॥ ३२ ॥ अदाता पुरुषस्त्यागी, सर्वमु-
त्सृज्य गच्छति । दातारं कृपणं मन्ये, मृतोऽप्यर्थं न मुञ्चति ॥ ३३ ॥ आदाय वारि परितः सरितां शतेभ्यः, किं नाम
साधितमनेन महार्णवेन? । क्षारीकृतं च वडवादहने हुतं च, पातालकुक्षिकुहरे विनिवेशितं च ॥ ३४ ॥ ये सन्तोषसुख-
प्रमोदमुदितास्तेषां न भिन्ना मुदो, ये त्वन्ये धनलुब्धसंकुलधियस्तेषां न तृष्णा हता । इत्थं कस्य कृते कृतः स विधिना
तादृक् पदं संपदां, स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ ३५ ॥ दानार्थिनो मधुकरा यदि कर्णतालैर्दूरीकृताः

करिवरेण मदान्धबुद्ध्या । तस्यैव गल्लयुगमण्डलहानिरेषा, भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥ ३६ ॥ प्रीतिं न प्रकटीकरोति सुहृदि द्रव्यव्ययाशङ्कया, भीतः प्रत्युपकारकारणभयान्नो गृह्यते सेवया । मिथ्या जल्पति वित्तमार्गणधिया स्तुत्याऽपि न प्रीयते, कीनाशो विभवव्ययव्यतिकरत्रस्तं कथं प्राणिति? ॥ ३७ ॥

## दानोपदेशसंबन्धिसूक्तानि ८६

संपत्तौ नियमः शक्तौ, सहनं यौवने व्रतम् । दारिद्र्ये दानमत्यल्पमपि लाभाय जायते ॥ १ ॥ निर्भाग्यविभवैर्वप्तुं, सप्तक्षेत्र्यां न लभ्यते । यत्र पत्रादयोऽप्युप्ताः, फलं यच्छन्ति वाञ्छितम् ॥ २ ॥ सारं तदेव सारं नियोज्यते यज्जिनेन्द्रभवनादौ । अपरं पुनरपरधनं पृथ्वीमलखण्डपिण्डं वा ॥ ३ ॥ अतिथिर्यस्य भग्नाशो, गृहात्प्रतिनिवर्त्तते । स तस्मै दुष्कृतं दत्त्वा, पुण्यमादाय गच्छति ॥४॥ तिथिपर्वोत्सवाः सर्वे, त्यक्ता येन महात्मना । अतिथिं तं विजानीयात्, शेषमभ्यागतं विदुः ॥ ५ ॥ जीवति स जीवलोके यस्य गृहाद्यान्ति नार्थिनो विमुखाः । भृतकवदन्यजनोऽसौ दिनानि पूरयति कालस्य ॥ ६ ॥ बोधयन्ति न याचन्ते, भिक्षाहारा गृहे गृहे । याचकस्य प्रदातव्यमदत्तफलमीदृशम् ॥ ७ ॥ पश्चाद्दत्तं परैर्दत्तं, लभ्यते वा न लभ्यते । स्वहस्तेन च यद्दत्तं, लभ्यते तन्न संशयः ॥ ८ ॥ क्षुत्क्षामः पथिको मदीयभवनं पृच्छन् कुतोऽप्यागतस्तत्किं गेहिनि! किञ्चिदस्ति यदयं भुङ्क्ते बुभुक्षातुरः । वाचाऽस्तीत्यभिधाय नास्ति च पुनः प्रोक्तं विनैवाक्षरैः, स्थूलस्थूलविलोललोचनगलद्बाष्पाम्भसां बिन्दुभिः ॥ ९ ॥ अहो पश्यतां दानजा कापि लीला, न भूता पुरा साम्प्रतं नो भवित्री । यया श्रेणिकोऽज्ञायि नो राजराजा, गृहेऽप्यागतः शालिना संगमेन ॥ १० ॥ यन्मयाऽस्तमिते सूर्ये,

॥ ११ ॥ क्षिप्त्वा तोयनिधिस्तले मणिगणं रत्नोत्करं
न दत्तं धनमर्थिनाम् । तद्धनं नैव पश्यामि, प्रातः कस्य भविष्यति ? ॥ ११ ॥ क्षिप्त्वा तोयनिधिस्तले मणिगणं रत्नोत्करं रोहणो, रेण्वाऽऽवृत्य सुवर्णमात्मनि दृढं बध्ध्वा सुवर्णाचलः । क्ष्मामध्ये च धनं निधाय धनदो विभ्यसरेभ्यः स्थितः, किं त्याज्यैः कृपणैः समोऽयमखिलार्थिभ्यः स्वमर्थं ददत् ॥ १२ ॥ ववसायफलं विहवो विहवस्स फलं सुपत्तविणिओगो । तयभावे ववसाओ विहवोवि अ दुग्गइनिमित्तं ॥ १३ ॥ उत्पाद्य कृत्रिमान् दोषान्, धनी सर्वत्र बाध्यते । निर्धनः कृतदोषोऽपि, सर्वत्र निरुपद्रवः ॥ १४ ॥ पृथिव्यामम्बुपूर्णायां, चातकस्य मरुस्थली । सत्यमेतदृपेर्वाक्यमदत्तं नैव लभ्यते ॥ १५ ॥ मा मंस्थाः क्षीयते वित्तं, दीयमानं कदाचन । कूपारामगवादीनां, ददतामेव संपदः ॥ १६ ॥ दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ १७ ॥ आयासशतलब्धस्य, प्राणेभ्योऽपि गरीयसः । गतिरेकैव वित्तस्य, दानमन्या विपत्तयः ॥ १८ ॥ दातव्यं भोक्तव्यं सति विभवे संचयो न कर्त्तव्यः । पश्येह मधुकरीणां संचितमर्थं हरन्त्यन्ये ॥ १९ ॥ प्रदत्तस्य प्रभुक्तस्य, दृश्यते महदन्तरम् । दत्तं श्रेयांसि संसूते, विष्ठा भवति भक्षितम् ॥ २० ॥ वितरति धनानि यावद्दाता सकलोऽपि कलकलस्तावत् । गलिते पयसि घनेभ्यः शाम्यन्ति शिखण्डिनां ध्वनयः ॥ २१ ॥ यच्छज्जलमपि जलदो वल्लभतामेति सकललोकस्य । नित्यं प्रसारितकरः सवितापि भवत्यचाक्षुष्यः ॥ २२ ॥ यदि भवति धनेन धनी क्षितितलनिहितेन भोगरहितेन । तस्माद्वयमपि धनिनस्तिष्ठति नः काञ्चनो मेरुः ॥ २३ ॥ अयमवसर उपकृतये प्रकृतिचला यावदस्ति संपदियम् । विपदि नियतोदयायां पुनरुपकर्त्तुं

१ व्यवसायफलं विभवो विभवस्य फलं सुपात्रविनियोगः । तदभावे व्यवसायः विभवोऽपि च दुर्गतिनिमित्तम् ॥ १३ ॥

कुतोऽवसरः ? ॥ २४ ॥ निजकरनिकरसमृद्ध्या धवलय भुवनानि पार्वणशशाङ्क! । सुचिरं हन्त न सहते हतविधिरिह सुस्थितं कमपि ॥ २५ ॥ अयमवसरः सरस्ते सलिलैरुपकर्त्तुमर्थिनामनिशम् । इदमपि सुलभमम्भो भवति पुरा जलधराभ्युदये ॥ २६ ॥ दाता सदैवाक्षयवैभवः स्याद्धनीपकस्तादृश एव निःस्वः । नद्यो भृता अप्यचिरेण रिक्ताः, कूपः पयोभिरतु तथैव पूर्णः ॥ २७ ॥ अदत्तदानाच्च भवेद्दरिद्री, दरिद्रभावाद्वितनोति पापम् । पापं हि कृत्वा नरकं प्रयाति, पुनर्दरिद्री पुनरेव पापी ॥ २८ ॥ याचितश्चिरयसि क्व नु? वीर!, प्राणने क्षणमपि प्रतिभूः कः? । शंसति द्विनयनी दृढनिद्रां, द्राग्निमेषमिषघूर्णनपूर्णा ॥ २९ ॥ याचमानजनमानसवृत्तेः, पूरणाय वत जन्म न यस्य । तेन भूमिरतिभारवतीयं, न द्रुमैर्न गिरिभिर्न समुद्रैः ॥ ३० ॥ नाक्षराणि पठता किमपाठि, विस्मृतः किमथवा पठितोऽपि? । इत्थमर्थिचयसंशयदोलाखेलनं खलु चकार नकारः ॥ ३१ ॥

## दानफलसूक्तानि ८७

धर्मस्य मूलं पदवी महिम्नः, पदं विवेकस्य फलं विभूतेः । प्राणाः प्रभुत्वे प्रतिभूश्च सिद्धेर्दानं गुणानामिदमेकमोकः ॥ १ ॥ दानेन भूतानि वशीभवन्ति, दानेन वैराण्यपि यान्ति नाशम् । परोऽपि बन्धुत्वमुपैति दानात्ततः पृथिव्यां प्रवरं हि दानम् ॥ २ ॥ दानेन चक्रित्वमुपैति जन्तुर्दानेन देवाधिपतित्वमुच्चैः । दानेन निःशेषयशोऽभिवृद्धिर्दानं शिवे धारयति क्रमेण ॥ ३ ॥ दानं मानवदानवेन्द्रपदवीविस्तारणं प्रत्यलं, दानं वासवसुन्दरीसरभसक्रीडाकलाकौशलम् । दानं मोक्षकपाटपाटनविधौ स्फुर्जत्सुरेन्द्रायुधं, दानं विष्टपजन्तुपुण्यनिवहप्रासादसिंहध्वजः ॥ ४ ॥ पात्रे धर्मनिबन्धनं तदि-

तरे प्रोद्यद्याख्यापकं, मित्रे प्रीतिविवर्द्धकं रिपुजने वैरापहारक्षमम् । भृत्ये भक्तिभरावहं नरपतौ सन्मानपूजाप्रदं, भ-
ट्टादौ च यशस्करं वितरणं न क्काप्यहो निष्फलम् ॥ ५ ॥ देवानां सदनं सुवर्णशिखरी सर्वसहा मेदिनी, रत्नानां निल-
यश्च कुम्भतनयोऽनन्तस्तथाऽहर्पतिः । स्वर्भाणुर्निशितं सुदर्शनमथो ज्येष्ठः करः केशवः, सोऽयं श्रीपुरुषोत्तमोऽपि व-
लिना दानेन भिक्षुः कृतः ॥ ६ ॥ लक्ष्मीः कामयते मतिर्मृगयते कान्तिस्तमालोकते, कीर्त्तिश्चुम्बति सेवते सुभगता नीरो-
गताऽऽलिङ्गति । श्रेयःसंहतिरभ्युपैति वृणुते स्वर्गोपभोगस्थितिर्मुक्तिर्वाञ्छति यः प्रयच्छति पुमान् पुण्यार्थमर्थं निजम् ॥७॥

## पात्रविचारसूक्तानि ८८

नवगुप्तिसनाथेन, ब्रह्मचर्येण भूपिताः । दन्तशोधनमात्रेऽपि, परस्वे विगतस्पृहाः ॥ १ ॥ कृतकारितानुमतिप्रभेदा-
रम्भवर्जिताः । मोक्षैकतानमनसो, यतयः पात्रमुत्तमम् ॥ २ ॥ प्रशान्ततनुवाकूचित्ता, भैक्ष्यमात्रोपजीविनः । रताः पर-
हिते नित्यं, यतयः पात्रमुत्तमम् ॥ ३ ॥ सम्यग्दर्शनवन्तस्तु, देशचारित्रयोगिनः । यतिधर्मेच्छवः पात्रं, मध्यमं गृहमे-
धिनः ॥ ४ ॥ सम्यक्त्वमात्रसंतुष्टा, व्रतशीलेषु निस्सहाः । तीर्थप्रभावनोद्युक्तास्तृतीयं पात्रमुच्यते ॥ ५ ॥ जं [1]तवसंज-
महीणं नियमविहूणं च बंभपरिहीणं । तं सीलसमं पत्तं वुड्डंतं वोलए अन्नं ॥ ६ ॥ न वीतरागादपरोऽस्ति देवो, न-
ब्रह्मचर्यादपरं तपोऽस्ति । नाभीतिदानात्परमस्ति दानं, चारित्रिणो नापरमस्ति पात्रम् ॥ ७ ॥ कुशास्त्रपाठमात्रेण, सदा
पण्डितमानिनः । तत्त्वतो नास्तिकप्राया, अपात्रमिति संशिताः ॥ ८ ॥ स्वबुद्ध्या धर्मवन्तोऽपि, मिथ्यादर्शनदूषिताः ।

१ यत्तपःसयमहीनं नियमविहीनं च ब्रह्मपरिहीणम् । तत् शैलसमं पात्रं, मूडत् मूडयत्यन्यम् ॥ ६ ॥

जिनधर्मद्विपो मूढाः, कुपात्रं स्युः कुतीर्थिनः ॥ ९ ॥ 'युधिष्ठिरभीमसंवादे भीमेनोक्तं'—मूर्खस्तपस्वी राजेन्द्र!, विद्वांश्च वृषलीपतिः। उभौ तौ तिष्ठतो द्वारे, कस्य दानं प्रदीयते? ॥ १० ॥ युधिष्ठिरः प्राह–सुखासेव्यं तपो भीम!, विद्या कष्टदुराचरी। विद्वांसं पूजयिष्यामि, तपोभिः किं प्रयोजनम्? ॥ ११ ॥ कृष्णः प्राह–न विद्यया केवलया, तपसा चापि पात्रता। यत्र वृत्तमुभे चेमे, तद्धि पात्रं प्रचक्षते ॥ १२ ॥ तत्र न्यायार्जितं क्षेत्रकालभावैरदूषितम्। देयं धर्मार्थिना दानं, विना कीर्त्यादिकारणम् ॥ १३ ॥ यतः—परान्नेनोदरस्थेन, यत्कुर्याच्च शुभाशुभम्। दायकस्य त्रयो भागाः, कर्त्ता भागेन लिप्यते ॥ १४ ॥ इयं मोक्षफले दाने, पात्रापात्रविचारणा। दयादानं तु सर्वज्ञैः, कुत्रापि न निषिध्यते ॥ १५ ॥ यतः—वर्षन् क्षारार्णवेऽप्यब्दो, मुक्तात्मा क्वापि जायते। सततं ददतो दातुः, पात्रयोगोऽपि संभवेत् ॥ १६ ॥ अनादरो विलम्बश्च, वैमुख्यं विप्रियं वचः। पश्चात्तापश्च पञ्चामी, सद्दानं दूषयन्त्यलम् ॥ १७ ॥

## अथ पात्रदानसंबन्धिसूक्तानि ८९

[1]अभयं सुपत्तदाणं अणुकंपा उचिअ कित्तिदाणं च। दोहिवि मुक्खो भणिओ तिण्णिवि भोगाइअं दिंति ॥ १ ॥ न कयं दीणुद्धरणं न कयं साहम्मिआण वच्छलं। हिअयंमि वीअराओ न धारिओ हारिओ जम्मो ॥ २ ॥ दरिद्रं भर

[1] अभयदानं सुपात्रदानमनुकम्पोचितकीर्तिदानानि च। द्वाभ्यामपि मोक्षो भणितस्त्रीण्यपि भोगादिकं ददते ॥ १ ॥ न कृतं दीनोद्धरणं न कृतं साधर्मिकाणां वात्सल्यम्। हृदये वीतरागो न धृतो हा हारितं जन्म ॥ २ ॥

भौषधं पथ्यं, नीरोगस्य किमौषधैः ॥ ३ ॥ आकड्ढिऊण नीरं रेवा रयणायरस्स
राजेन्द्र!, मा समृद्धं कदाचन । व्याधितस्यौषधं पथ्यं, नीरोगस्य किमौषधैः ॥ ३ ॥ आकड्ढिऊण नीरं रेवा रयणायरस्स

गच्छेइ । नहु गच्छइ मरुदेसे सव्वे भरिआ भरिज्जंति ॥ ४ ॥ जयन्ति वङ्कचूलाद्याः, कोशा चाऽऽश्रयदानतः । अव-
ल्तिसुकुमालश्च, तीर्णाः संसारसागरम् ॥ ५ ॥ एलापूगफलाई साहूण अकप्पिआ अचित्तावि । रागंगं जेण भवे न
तेसिं दाणं न या गहणं ॥ ६ ॥ असोपाश्रयभैषज्यवस्त्रपात्रादिदानतः । उपष्टम्भोऽनेकधा स्यादन्नदानं विशिष्यते ॥ ७ ॥
अन्नदातुरुपत्तीर्थकरोऽपि कुरुते करम् । तच्च दानं भवेत्पात्रे, दत्तं बहुफलं यतः ॥ ८ ॥ खलोऽपि गवि दुग्धं स्याद्,
दुग्धमप्युरगे विषम् । पात्रापात्रविशेषेण, तत्पात्रे दानमुत्तमम् ॥ ९ ॥ सैव भूमिस्तदेवाम्भः, पश्य पात्रविशेषतः । आम्रो
मधुरतामेति, कटुत्वं निम्बपादपः ॥ १० ॥ सा साई तंपि जलं पत्तविसेसेण अंतरं गरुअं । अहिमुहि पडिअं गरलं
सिप्पउडे मुत्तियं होइ ॥ ११ ॥ व्याजे स्याद् द्विगुणं वित्तं, व्यवसाये चतुर्गुणम् । क्षेत्रे शतगुणं प्रोक्तं, पात्रेऽनन्तगुणं
पुनः ॥ १२ ॥ सत्पात्रं महती श्रद्धा, काले देयं यथोचितम् । धर्मसाधनसामग्री, बहुपुण्यैरवाप्यते ॥ १३ ॥ [4]केसिंचि
होइ वित्तं चित्तं अन्नेसिमुभयमन्नेसिं । चित्तं वित्तं पत्तं तिण्णिवि केसिंचि धन्नाणं ॥ १४ ॥ कत्थवि दलं न गंधो

---

१ आकृष्य नीरं नर्मदा रत्नाकरायार्पयति । नच गच्छति मरुदेशे सर्वे भृता म्रियन्ते ॥ ४ ॥ २ एलापूगफलाद्याः साधूनामकल्प्या अचित्ता अपि ।
रागाङ्गं येन भवेत्त तेषां दानं न वा ग्रहणम् ॥ ६ ॥ ३ सा स्वातिस्तज्जलं पात्रविशेषेणान्तरं गुरु । अहिमुखे पतितं गरं शुक्तिपुटे मौक्तिकं भवति ॥ ११ ॥
४ केषाञ्चिद् भवति वित्तं चित्तमन्येषामुभयमन्येषाम् । चित्तं वित्तं पात्रं त्रीण्यपि केषाञ्चिद्धन्यानाम् ॥ १४ ॥ कुत्रचिद् दलं न गन्धः कुत्रचिद् गन्धो
नैव मकरन्दः । एकस्मिन् कुसुमे मधुकर! हे त्रयो गुणा न दृश्यन्ते ॥ १५ ॥

कत्थवि गंधो न चेव मयरंदो। इक्कुसुमंमि महुअर! दो तिण्णि गुणा न दीसंति ॥ १५॥ कत्थवि जलं न छाया कत्थवि छाया न सीअलं सलिलं । जलछायासंजुत्तं तं पहिअ ! सरोवरं विरलं ॥ १६ ॥ कत्थवि तवो न तत्तं कत्थवि तत्तं न सुद्धचारित्तं । तवतत्तचरणसहिआ मुणिणोवि अ थोव संसारे ॥ १७ ॥ सुक्कं कट्ठं कडुआ य तुंवडी नीरसा य तंती अ। वज्जंति महुरलावं संजोगा दुल्लहा हुंति ॥ १८ ॥ धन्योऽहं मम मन्दिरं वरतरं पुण्यं धनं मामकं, श्लाघ्यं जन्म सुवासरोऽद्य यदयं सर्वज्ञमार्गानुगः । आयातो मुनिपुङ्गवो मम गृहं गृह्णाति चानुग्रहात्, किञ्चित्कश्चिदिति प्रमोदकलितो दत्ते धनं शुद्धधीः ॥ १९ ॥ श्रीमज्जैनगृहे जिनप्रतिकृतौ जैनप्रतिष्ठाविधौ, श्रीसार्वस्नपने जिनार्चनविधौ श्रीसङ्घपूजाविके। श्रीमच्छासनलेखने च सततं श्रीतीर्थयात्रामुखे, येषां स्वं विनियोगमेति धनिनां धन्यास्त एव क्षितौ ॥ २० ॥ यदपि तदपि शुद्धं चन्दनावलदत्तं, झगिति फलति पात्रेऽन्यत्र नो चार्वपि स्वम् । जलधिजलमसारं वारिवाहेऽमृतीस्यान्मधुरमपि हि दुग्धं पन्नगास्ये विषं स्यात् ॥ २१ ॥ प्रतिदिनमपि दानं पुण्यसंपन्निदानं, पुनरधिकफलं स्यात्पारणाहोत्तराहे। रचयति जलदोऽन्नं कृत्तिकादौ सुवृष्टः, पुनरमलमनर्घं मौक्तिकं स्वातियोगे ॥ २२ ॥ श्रीनाभेयजिनेश्वरो धनभवे श्रेयःश्रियामाश्रयः, श्रेयांसः स च मूलदेवनृपतिः सा नन्दना चन्दना । धन्योऽयं कृतपुण्यकः शुभमनाः श्रीशालि-

---

१ कुत्रापि जलं न छाया कुत्रापि छाया न शीतलं सलिलम् । जलच्छायासंयुक्तं तत् पान्थ ! सरोवरं विरलम् ॥ १६ ॥ कुत्रापि तपो न तत्त्वं कुत्रापि तत्त्वं न शुद्धचारित्रम् । तपस्तत्त्वचरणसहिता मुनयोऽपि च स्तोकाः संसारे ॥ १७ ॥ शुष्कं काष्ठं कटुका च तुम्बी नीरसा च तन्त्री च । वाद्यन्ते मधुरालापं संयोगा दुर्लभा लोके ॥ १८ ॥

भद्रादयः, सर्वेऽप्युत्तमदानदानविधिना जाता जगद्विश्रुताः ॥ २३ ॥ चारित्रं चिनुते धिनोति विनयं ज्ञानं नयत्युन्नतिं, पुष्णाति प्रशमं तपः प्रबलयत्युल्लासयत्यागमम् । पुण्यं कन्दलयत्यघं विदलति स्वर्गं ददाति क्रमान्निर्वाणश्रियमातनोति निहितं पात्रे पवित्रं धनम् ॥ २४ ॥

## दातृसंबन्धिसूक्तानि ९०

दाता ध्यायति विष्टपं कियदिदं तत्रापि भागास्त्रयस्तत्राल्पा वसुधाऽम्बुधिर्यदवधिस्तत्रापि खण्डान्यहो । तत्रैकत्र पत्ताभि तद्गिरिसरित्कान्ताररुद्धं ततः, काः शक्तिः किमु वा ददे पुनरहं यद्दातृशब्दो मयि ॥ १ ॥ उत्तमोऽप्रार्थितो दत्ते, मध्यमः प्रार्थितः पुनः । याचकैर्याच्यमानोऽपि, दत्ते न त्वधमाधमः ॥ २ ॥ नीचाः क्लेशेन याच्यन्ते, ते च यच्छन्ति नार्थिताः । अथ किञ्चित्प्रयच्छन्ति, न गले न च तालुनि ॥ ३ ॥ साधुरेवार्थिभिर्याच्यः, क्षीणवित्तोऽपि सर्वदा । शुष्कोऽपि हि नदीमार्गः, खन्यते सलिलार्थिभिः ॥ ४ ॥ कर्णस्त्वचं शिबिर्मांसं, जीवं जीमूतवाहनः । ददौ दधीचिरस्थीनि, नास्त्यदेयं महात्मनाम् ॥ ५ ॥ विलसति मदप्रवाहे वहन्ति मालिन्यमानने करिणः । दानप्रवृत्तिसमये निर्मलमुखवृत्तयो विरलाः ॥ ६ ॥ गर्जित्वा बहुदूरमुन्नतिभृतो मुञ्चन्ति मेघा जलं, भद्रस्यापि गजस्य दानसमये संजायतेऽन्तर्मदः । पुष्पाद्यम्बरयापनेन ददति प्रायः फलानि द्रुमा, नो छेको न मदो न कालहरणं दानप्रवृत्तौ सताम् ॥ ७ ॥ वार्नाथोऽपि किलोत्ससर्ज मथितो रत्नानि रत्नाकरो, मन्थानेन विलोडितं वितरति स्नेहं दधि स्वाद्वपि । भद्रोऽपि द्विरदश्च मौक्तिकमणीन् कुम्भस्थलादाहतो, दत्ते सत्पुरुषास्तु केऽपि कमलां स्थाने व्ययन्ति स्वयम् ॥ ८ ॥

याचकसंबन्धिसूक्तानि ९१

तावद्गुणा गुरुत्वं च, यावन्नार्थयते जनः । अर्थी चेत्पुरुषो जातः, क्व गुणाः क्व च गौरवम्? ॥ १ ॥ तावत्सर्वगुणालयः पटुमतिः साधुः सतां वल्लभः, शूरः सच्चरितः कलङ्कविकलः कान्तः कलाज्ञः कविः । दक्षो धर्मरतः कुलीनविमलः प्राप्तप्रभावः प्रभुर्यावन्निष्ठुरवज्रपातसदृशं देहीति नो भाषते ॥ २ ॥ देहीति वचनं श्रुत्वा, देहस्थाः पञ्च देवताः । नश्यन्ति तत्क्षणादेव, श्रीह्रीधीधृतिकीर्त्तयः ॥ ३ ॥ अक्षरद्वयमभ्यस्तं, नास्ति नास्तीति यत्पुरा । तदिदं देहि देहीति, विपरीतमुपस्थितम् ॥ ४ ॥ वरं जातो वने वृक्षः, पाषाणो वा वरं गिरौ । वरं पक्षी पतङ्गो वा, न पुनर्याचको नरः ॥ ५ ॥ गतिभङ्गः स्वरो दीनो, गात्रस्वेदो महाभयम् । मरणे यानि चिह्नानि, तानि चिह्नानि याचके ॥ ६ ॥ अदृष्टमुखभङ्गस्य, युक्तमन्धस्य याचितुम् । अहो एतन्महाकष्टं, चक्षुष्मानपि याचते ॥ ७ ॥ मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं न त्वणुस्त्वंशीकृत्य स एव चात्र शतशो राज्ञां गणैर्भुज्यते । ते दद्युर्ददतेऽथवा किमपि न क्षुद्रा दरिद्रा भृशं, धिग् धिक् तान् पुरुषाधमान् धनलवं तेभ्योऽपि वाच्छन्ति ये ॥ ८ ॥ गुरुतामुपयाति यन्मृतः, पुरुषस्तद्विदितं मयाऽधुना । ननु लाघवहेतुरार्थिता, न मृते तिष्ठति सा मनागपि ॥ ९ ॥ लज्जावतः कुलीनस्य, धनं याचितुमिच्छतः । कण्ठे पारापतस्येव, वाक् करोति गताऽऽगतम् ॥ १० ॥ दुक्खाण एउ दुक्खं गुरुअं गुरुआण हिअयमज्झंमि[1] । जंपि परो पत्थिज्जइ जंपि य परपत्थणाभंगो ॥ ११ ॥ तृणं लघु तृणात्तूलं, तूलादपि हि याचकः । वायुना किं न नीतोऽसौ?, मामयं याचयिष्यति

[1] दुःखानामेवद् दुःखं गुरु गुरूणां हृदयमध्ये । यदपि परः प्रार्थ्यते यदपि च परप्रार्थनाभङ्गः ॥ ११ ॥

॥ १२ ॥ पृथ्व्या गुरुतरं किं? स्यान्नगादुच्चतरं किमु? । तृणाल्लघुतरं किं स्याद्वायोः शीघ्रतरं किमु? ॥ १३ ॥ पृथ्व्या गुरुतरी माता, नगादुच्चतरः पिता । तृणाल्लघुतरो ह्यर्थी, वायोः शीघ्रतरं मनः ॥ १४ ॥

## दारिद्र्यसंबन्धिसूक्तानि ९२

परीक्ष्य सत्कुलं विद्यां, शीलं शौर्यं सुरूपताम् । विधिर्ददाति निपुणं, कन्यामिव दरिद्रताम् ॥ १ ॥ हे दारिद्र्य! नमस्तुभ्यं, सिद्धोऽहं त्वत्प्रसादतः । येन पश्याम्यहं सर्वं, न मां पश्यति कश्चन ॥ २ ॥ वरं रेणुर्वरं भस्म, नष्टश्रीर्न पुनर्नरः । मुत्तमर्णं दृश्यते पूजा, क्वापि पर्वणि पूर्वयोः ॥ ३ ॥ मृतदुर्गतयोर्मध्ये, मृतः शस्यो न दुर्गतः । पूर्वो हि लभते वारि, तद्बिन्दुमपि नोत्तरः ॥ ४ ॥ निर्द्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो, निस्तेजाः परिभूयते परिभवान्निर्वेदमागच्छति । निर्विण्णः शुचमेति शोकसहितो बुद्धेः परिभ्रश्यते, निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ ५ ॥ दौःस्थ्यं नाम पराभूतेः, स्थानमाद्यं न संशयः । राजाऽपि गोपतेः पादान्, क्षीणः संसेवते यतः ॥ ६ ॥ सहोदयव्ययाः पञ्च, दारिद्र्यस्यानुजीविनः । रूपं दौर्भाग्यमालस्यं, बुभुक्षाऽपत्यसंततिः ॥ ७ ॥ विपुलमतेरपि बुद्धिर्नश्यति पुरुषस्य विभवहीनस्य । घृतलवणतैलतण्डुलवस्त्रेन्धनचिन्तया सततम् ॥ ८ ॥ जीवन्तो मृतकाः पञ्च, श्रूयन्ते किल भारते! । दरिद्रो व्याधितो मूर्खः, प्रवासी नित्यसेवकः ॥ ९ ॥ अपुत्रस्य गृहं शून्यं, दिशः शून्या ह्यबान्धवाः । मूर्खस्य हृदयं शून्यं, सर्वशून्या दरिद्रता ॥ १० ॥ नीचानपि निषेवन्ते, पोषयन्ति पशूनपि । समुद्रमपि लङ्घन्ते, दारिद्र्योपहता नराः ॥ ११ ॥ अम्बा तुष्यति न मया न स्नुषया साऽपि नाम्बया न मया । अहमपि न तया न तया वद राजन्! कस्य

दोषोऽयम्? ॥ १२ ॥ अयं पटश्छिद्रशतैरलङ्कृतः, पितामहाद्यैः परिभुक्तयौवनः । अयं पटो वाञ्छति मत्सुतं सुतान्, अयं पटः संवृतः एव शोभते ॥ १३ ॥ येनैवाम्बरखण्डेन, दिवा संचरते रविः । तेनैव निशि शीतांशुरहो दारिद्र्यमेतयोः ॥ १४ ॥ कुटुम्बचिन्ताकुलितस्य पुंसः, श्रुतं च शीलं च गुणाश्च सर्वे । अपक्वकुम्भे निहिता इवापः, प्रयान्ति देहेन समं विनाशम् ॥ १५ ॥ तैलं नास्ति घृतं नास्ति, नास्ति गेहे युगन्धरी । शाकान्तर्लवणं नास्ति, तन्नास्ति यच्च भुज्यते ॥ १६ ॥ अज्ज घरे नत्थि घयं तिल्लं लूणं च इंधणं नत्थि । जाया य अज्ज तउणी कल्लं कह होहिइ कुडुंबं ? ॥ १७ ॥ घरधंदा दुह पालणा सायर कुक्षिसमाण । एकइं नारिं आवटिआं गाहा पंच सयाइं ॥ १८ ॥ कुटुम्बकार्याण्यतिदुर्भराणि, समुद्रकुक्षेः समरूपकाणि । रात्रिर्विभाता गृहचिन्तयैव, नष्टं गतं श्लोकशतं नरेन्द्र ! ॥ १९ ॥ वट्टइ घरे कुमारी वालो तणुओ अ रोअइ ( विढप्पइ ) न अत्थो । रोगबहुलं कुडुंबं ओसहमूलाइअं नत्थि ॥ २० ॥ व्याधिरत्रैव दुःखाय, दुःखायामुत्र पातकम् । इहाऽमुत्र च दुःखाय, ऋणं पुत्रक ! मा कृथाः ॥ २२ ॥

## क्षुत्संबन्धिसूक्तानि ९३

तावन्मनोनिवासान्तर्वसन्ति गुणसंपदः । बुभुक्षाराक्षसी सेयं, यावद्धावति न क्षुधा ॥ १ ॥ पञ्च नश्यन्ति पद्माक्षि !,

९२ दारिद्र्ये श्लो. २२

९३ क्षुधि श्लो. १०

१ अद्य गृहे नास्ति घृतं तैलं लवणं चेन्धनं नास्ति । जाया चाद्य प्रसूता कल्ये कथं भविष्यति कुटुम्बम्? ॥ १७ ॥ २ वर्तते गृहे कुमारी बालस्तनयश्च रोदिति नार्थः । रोगबहुलं कुटुम्बमौषधमूल्यादिकं नास्ति ॥ २१ ॥

क्षुधार्त्तस्य न संचयः । तेजो लज्जा मतिर्मानं, मदनश्चापि पञ्चमः ॥ २ ॥ किमकारि न कार्पण्यं, कस्यालङ्घि न देहली । भस्य दग्धोदरस्यार्थे, किमनाटि न नाटकम् ? ॥ ३ ॥ 'किं किं न कयं को को न पत्थिओ कह कह न नामिअं सीसं ? । दुब्भरउअरस्स कए किं न कयं किं न कायव्वं ? ॥ ४ ॥ एकः स एव जीवतु हृदयविहीनोऽपि सहृदयो राहुः । यः सकललघिमकारणमुदरं न बिभर्त्ति दुष्पूरम् ॥ ५ ॥ लज्जामुज्झति सेवतेऽन्त्यजजनं दीनं वचो भाषते, कृत्याकृत्यविवेकमाश्रयति नो नापेक्षते सद्गतिम् । भण्डत्वं विदधाति नर्त्तनकलाभ्यासं समभ्यस्यते, दुष्पूरोदरपूरणव्यतिकरे किं किं न कुर्यान्नरः ? ॥ ६ ॥ मानं मुञ्चति गौरवं परिहरत्यायाति दीनात्मतां, लज्जामुत्सृजति श्रयत्यकरुणां नीचत्वमालम्बते । भार्याबन्धुसुहृत्सुतेष्वपकृतीर्नानाविधाश्चेष्टते, किं किं यन्न करोति निन्दितमपि प्राणी क्षुधा पीडितः ॥ ७ ॥ जीवंति खग्गछिन्ना पव्वयपडिआवि केवि जीवंति । जीवंति उदहिपडिआ चट्टुच्छिन्ना न जीवंति ॥ ८ ॥ जीवंति अवडपडिआ भयरवपडिआ पुणोवि जीवंति । जीवंति खग्गछिन्ना चट्टुछिन्ना न जीवंति ॥ ९ ॥ भूपभिराडी तुं भणउं सच्चोयाई माइ । मारिआ कुच्या वाहीरओ, माणुस आणइ ठाइ ॥ १० ॥

---

१ किं किं न कृतं कस्को न प्रार्थितः क क न नामितं शिरः । दुर्भरोदरस्य कृते किं न कृतं किं न कर्त्तव्यम् ॥ ४ ॥ २ जीवन्ति खड्गच्छिन्नाः पर्वतपतिता अपि केऽपि जीवन्ति । जीवन्ति उदधिपतिताः भोजनो (उदरो) च्छिन्ना न जीवन्ति ॥ ८ ॥ जीवन्त्यवटपतिता भैरवपतिताः पुनरपि जीवन्ति । जीवन्ति खड्गच्छिन्नाः० ॥ ९ ॥

## मैथुनसंबन्धिसूक्तानि ९४

मेहुणसन्नारूढो नवलक्ख हणेइ सुहुमजीवाणं। केवलिणा पन्नत्तं सद्दहिअव्वं पयत्तेणं ॥ १ ॥ इत्थीण जोणिमज्झे गब्भगया हुंति नव लक्खा जीआ (गब्भया हुंति जीअ नव लक्खा)। उप्पज्जंति चयंति अ समुच्छिमा जे ते असंखा ॥ २ ॥ पुरिसेण सह गयाए तेसिं जीवाण होइ उद्दवणं। वेणुगदिट्ठंतेणं तत्तायसिलागनाएणं ॥ ३ ॥ पंचिंदिआ मणुस्सा एगनरभुत्तनारिगब्भंमि। उक्कोसं नवलक्खा जायंती एगवेलाए ॥ ४ ॥ नवलक्खाणं मज्झे जायइ एगस्स दुण्ह य समत्ती। सेसा पुण एमेव य विलयं वच्चंति तत्थेव ॥ ५ ॥ इत्थीजोणीएसुं, हवंति वेइंदिआ उ जे जीवा। इक्को व दो व तिन्नि व लक्खपुहुत्तं च उक्कोसं ॥ ६ ॥ असंखया थीनरमेहुणाओ, मुच्छंति पंचिंदिअमाणुसाओ। नीसेसअंगाण विभत्तिचंगे, भणइ जिणो पन्नवणाउवंगे ॥ ७ ॥ आजम्मेणं तु जं पावं बंधिज्जा मच्छबंधओ। वयभंगं काउमणो, तं चेव य पुणो अट्ठगुणं ॥ ८ ॥

---

१ मैथुनसंज्ञारूढो नवलक्षीं हन्ति सूक्ष्मजीवानाम्। केवलिना–तीर्थंकरेणैव भणितं श्रद्धातव्यं प्रयत्नेन ॥ १ ॥ स्त्रीणां योनिमध्ये गर्भजा भवन्ति जीवा नव लक्षाः। उत्पद्यन्ते च्यवन्ते च संमूर्च्छिमा ये तेऽसंख्याः ॥ २ ॥ पुरुषेण सह गतायां तेषां जीवानां भवत्युपद्रवणम्। वेणुकदृष्टान्तेन तप्तायःशलाकाज्ञातेन ॥ ३ ॥ पञ्चेन्द्रिया मनुष्या एकनरभुक्तनारीगर्भे। उत्कृष्टतो नव लक्षा जायन्ते एकवेलायाम् ॥ ४ ॥ नवलक्षाणां मध्ये जायते एकस्य द्वयोश्च समाप्तिः। शेषाः पुनरेवमेव च विलयं गच्छन्ति तत्रैव ॥ ५ ॥ स्त्रीयोनिषु भवन्ति द्वीन्द्रिया एव ये जीवाः। एको द्वौ वा त्रयो वा लक्षपृथक्त्वं चोत्कृष्टतः ॥ ६ ॥ असंख्यकाः स्त्रीनरमैथुनात् मूर्च्छन्ति पञ्चेन्द्रियमनुष्याः। निःशेषाङ्गानां विभक्तिरुचिरे भणति जिनः प्रज्ञापनोपाङ्गे ॥ ७ ॥ आजन्म तु यत् पापं बध्नीयात् मत्स्यबन्धकः। व्रतभङ्गं कर्तुमनाः तदेव पुनरष्टगुणम् ॥ ८ ॥

से कह न वंदणिज्जा ? रूवं दट्ठूण परकलत्ताणं । धाराहयव्व वसहा, वच्चंति महीं पलोअंता ॥ १ ॥ अलसा होइ अकज्जे पाणिवहे पंगुला सया होइ । परतत्तीसु अ बहिरा जच्चंधा परकलत्तेसु ॥ २ ॥ सुविसुद्धसीलजुत्तो पावइ कित्तिं जसं च इह लोए । सव्वजणवल्लहो च्चिअ सुहगइभागी अ परलोए ॥ ३ ॥ देवदाणवगंधव्वा, जक्खरक्खसकिंनरा । बंभयारिं नमंसंति, दुक्करं जे करंति तं ॥ ४ ॥ जो देइ कणयकोडिं अहवा कारेइ कणयजिणभवणं । तस्स न तत्ति-अपुण्णं जत्तिअ बंभव्वए धरिए ॥ ५ ॥ काएण बंभचेरं धरंति भव्वा उ जे असुद्धमणा । कप्पंमि बंभलोए ताणं नियमेण उववाओ ॥ ६ ॥ जो वज्जइ परदारं सो सेवइ नो कयाइ परदारं । सकलत्ते संतुट्ठो सकलत्तो सो नरो होइ ॥ ७ ॥ यस्तु स्वदारसंतोषी, विषयेषु विरागवान् । गृहस्थोऽपि स्वशीलेन, यतिकल्पः स कल्प्यते ॥ ८ ॥ नास्त्यहिंसा-समो धर्मो, न संतोषसमं व्रतम् । न सत्यसदृशं शौचं, शीलतुल्यं न मण्डनम् ॥ ९ ॥ कुण्डले नाभिजानामि, नाभि-

---

१ स कथं न वन्दनीया रूपं दृष्ट्वा परकलत्राणाम् । धाराहता इव वृषभा व्रजन्ति महीं प्रलोकयन्तः ॥ १ ॥ अलसा भवताकार्ये प्राणिवधे पङ्गुला सदा भवत । परतप्तिषु बधिरा जात्यन्धाः परकलत्रेषु ॥ २ ॥ सुविशुद्धशीलयुक्तः प्राप्नोति कीर्तिं यशश्च इह लोके । सर्वजनवल्लभ एव शुभगतिभागी च परलोके ॥ ३ ॥ देवदानवगन्धर्वा यक्षराक्षसकिन्नराः । ब्रह्मचारिणं नमस्यन्ति दुष्करं ये कुर्वन्ति तत् ॥ ४ ॥ यो ददाति कनककोटीमथवा कारयति कनकजिनभवनम् । तस्य न तावत्पुण्यं यावत् ब्रह्मव्रते धृते ॥ ५ ॥ कायेन ब्रह्मचर्यं धारयन्ति भव्यास्तु येऽशुद्धमनसः । कल्पे ब्रह्मलोके तेषां नियमेनोपपातः ॥ ६ ॥ यो वर्जयति परदारान् स सेवते नो कदाचित् परदारम् । स्वकलत्रे संतुष्टः सकलत्रोऽसौ नरो भवति ॥ ७ ॥

जानामि कङ्कणे । नूपुरे त्वभिजानामि, नित्यं पादाब्जवन्दनात् ॥ १० ॥ शीलं नाम नृणां कुलोन्नतिकरं शीलं परं
भूषणं, शीलं ह्यप्रतिपाति वित्तमनघं शीलं सुगत्यावहम् । शीलं दुर्गतिनाशनं सुविपुलं शीलं यशः पावनं, शीलं निर्वृतिहे-
तुरेव परमः शीलं तु कल्पद्रुमः ॥ ११ ॥ शीलं सर्वगुणौघमस्तकमणिः शीलं विपद्रक्षणं, शीलं भूषणमुज्ज्वलं मुनिजनैः
सर्वैः समासेवितम् । दुर्वाराधिजदुःखवह्निशमने प्रावृट्पयोदोदकं, शीलं सर्वसुखैककारणमतः स्यात्कस्य नो सम्मतम्?
॥ १२ ॥ व्याघ्रव्यालजलानलादिविपदस्तेषां व्रजन्ति क्षयं, कल्याणानि समुल्लसन्ति विबुधाः सान्निध्यमध्यासते । कीर्तिः
स्फूर्तिमियर्त्ति यात्युपचयं धर्मः प्रणश्यत्यघं, स्वर्निर्वाणसुखानि संनिदधते ये शीलमाबिभ्रते ॥ १३ ॥ वह्निस्तस्य जला-
यते जलनिधिः कुल्यायते तत्क्षणान्मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते । व्यालो माल्यगणायते विषरसः
पीयूषवर्षायते, यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ १४ ॥ हरति कुलकलङ्कं लुम्पति पापपङ्कं, सुकृ-
तमुपचिनोति श्लाघ्यतामातनोति । नमयति सुरवर्गं हन्ति दुर्गोपसर्गं, रचयति शुचि शीलं स्वर्गमोक्षौ सलीलम् ॥ १५ ॥
सीतया दुरपवादभीतया, पावके स्वतनुराहुतीकृता । पावकस्तु जलतां जगाम यत्तत्र शीलमहिमा विजृम्भितः ॥ १६ ॥
ऐश्वर्यस्य विभूषणं मधुरता शौर्यस्य वाक्संयमो, ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः । अक्रोधस्तपसः
क्षमा प्रभवतो धर्मस्य निर्व्याजता ( व्यजिता, ) सर्वेषामपि सर्वकामगुणितं शीलं परं भूषणम् ॥ १७ ॥ वेश्या रागवती
सदा तदनुगा षड्भी रसैर्भोजनं, रम्यं धाम मनोरमं वपुरहो नव्यो वयःसंगमः । कालोऽयं जलदागम( विल )स्तदपि यः
कामं जिगायादरात्, तं वन्दे युवतिप्रबोधकुशलं श्रीस्थूलभद्रप्रभुम् ॥ १८ ॥ श्रीमन्नेमिजिनो दिनोऽघतमसां जम्बूप्रभुः

केवली, सम्यग्दर्शनवान् सुदर्शनगृही स स्थूलभद्रो मुनिः । साचक्कारिसरस्वती च सुभगाः सीतासुभद्रादयः, शीलोदाहरणे नयन्ति जनितानन्दा जगत्यद्भुताः ॥ १९ ॥

## अशीलसंबन्धिसूक्तानि ९६

स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटो भवति । सम्पूर्णेऽपि तडागे काकः कुम्भोदकं पिबति ॥ १ ॥ जं छन्नं आयरिअं तइआ जणणीइ जुव्वणमएणं । तं पइडिज्जइ इण्हिं सुएहिं सीलं चयंतेहिं ॥ २ ॥ अप्पा धुलीहिं मेलिउ, सयणे (सयणह) दीधउ छार । पगि पगि माथाढंकणुं, जिणे जोई परदार ॥ ३ ॥ जे परदारपरंमुह ते वुच्चइ नर-सिंह । जे परिरंभइ पररमणी ताहं भु (फू) सिज्जइ लीह ॥ ४ ॥ वरं अग्गिंमि पवेसो वरं विसुद्धेण कम्मुणा मरणं । मा गहिअव्वयभंगो मा जीअं खलिअसीलस्स ॥ ५ ॥ वरं शृङ्गोत्तुङ्गाद्गुरुशिखरिणः क्वापि विषमे, पतित्वाऽयं कायः कठिनदृषदन्तर्विदलितः । वरं न्यस्तो हस्तः फणिपतिमुखे तीक्ष्णदशने, वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ ६ ॥ दत्तस्तेन जगत्यकीर्त्तिपटहो गोत्रे मषीकूर्चकश्चारित्रस्य जलाञ्जलिर्गुणगणाऽऽरामस्य दावानलः । संकेतः सकलाऽऽपदां शिवपुरद्वारे कपाटो दृढः, शीलं येन निजं विलुप्तमखिलत्रैलोक्यचिन्तामणिः ॥ ७ ॥

१ यत् छन्नं सदाऽऽचीर्णं जनन्या यौवनमदेन । तत् प्रकट्यते इदानीं सुतैः शीलं त्यजद्भिः ॥ २ ॥ २ वरमग्नौ प्रवेशो वरं विशुद्धेन कर्मणा मरणम् । न गृहीतव्रतभङ्गः न जीवितं स्खलितशीलस्य ॥ ५ ॥

## रागसंबन्धिसूक्तानि १७

अशक्यं रूपमद्रष्टुं, चक्षुर्गोचरमागतम् । रागद्वेषौ च यौ तत्र, तौ बुधः परिवर्जयेत् ॥ १ ॥ अरिहंतेसु अ रागो रागो साहुसु बंभयारिसुं । एस पसत्थो रागो अज्ज सरागाण साहूणं ॥ २ ॥ नग्नेऽपि शूलिनि कपालिनि कालकूटप्रोत्सर्पिसर्पभयदे ज्वलदग्निनेत्रे । गौरि ररञ्ज मृतभस्मकृताङ्गरागे, दोषं न पश्यति जनो जनितानुरागः ॥ ३ ॥ अल्लो सुक्को य दो छूढा गोळया मट्टियामया । दोवि आवडिया कुड्डे जो अल्लो सो विलग्गइ ॥ ४ ॥ उवलेवो होइ भोगेसु, अभोगी णोवलिप्पइ । भोगी भमइ संसारे, अभोगी विप्पमुच्चइ ॥ ५ ॥ कुविअस्स आउरस्स य वसणं पत्तस्स रायरत्तस्स । मत्तस्स मरंतस्स सब्भावा पायडा हुंति ॥ ६ ॥ रागी बध्नाति कर्माणि, वीतरागो विमुच्यते । जना जिनोपदेशोऽयं, संक्षेपाद्बन्धमोक्षयोः ॥ ७ ॥ रागद्वेषौ यदि स्यातां, तपसा किं प्रयोजनम्? । तावेव यदि न स्यातां, तपसा किं प्रयोजनम्? ॥ ८ ॥ रागादयो हि रिपवो जिननायकेनाजीयन्त ये निजबलाद्बलिनोऽपि बाढम् । पुष्णन्ति तान् जडधियो हृदयालये ये, तेषां प्रसीदति कथं जगतामधीशः? ॥ ९ ॥ मुखे पुरीषप्रक्षेपं, तथा पाषाणक्षेपणम् (पेषणं) । एकेन्द्रियाऽपि सहते, मृत्तिका रागदोषतः ॥ १० ॥ रागोऽयं दोषपोषाय, चेतनारहितेष्वपि । मञ्जिष्टा कुट्टनस्थान-

---

१ अर्हत्सु च रागो रागः साधुषु ब्रह्मचारिषु । एष प्रशस्तो रागोऽद्य सरागाणां साधूनां ॥ २ ॥ २ आर्द्रः शुष्कश्च द्वौ क्षिप्तौ गोलकौ मृत्तिकामयौ । द्वावपि कुड्ये आपतितौ य आर्द्रः स विलगति ॥ ४ ॥ उपलेपो भवति भोगैरभोगी नोपलिप्यते । भोगी भ्राम्यति संसारेऽभोगी विप्रमुच्यते ॥ ५ ॥ कुपितस्यातुरस्य च व्यसनप्राप्तस्य रागरक्तस्य । मत्तस्य म्रियमाणस्य सद्भावाः प्रकटा भवन्ति ॥ ६ ॥

अंशवापसहा भृशम् ॥ ११ ॥ द्विजडा चोलमजीट्ट जिम, तोले घणे चडेसि । रंगपसायें आपणे, परिभव घणा सहेसि ॥ १२ ॥ अक्खाण रसणी कंमाण मोहनी तह वयाण बंभवयं । गुत्तीण य मणगुत्ती चउरो दुक्खेण जिप्पंति ॥ १३ ॥
वनेऽपि दोषाः प्रभवन्ति रागिणां, गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः । अकुत्सिते कर्मणि यः प्रवर्त्तते, निवृत्तरागस्य गृहं तपोवनम् ॥ १४ ॥ क यामः कुत्र तिष्ठामः, किं कुर्मः किं न कुर्महे? । रागिणश्चिन्तयन्त्येवं, नीरागाः सुखमासते ॥ १५ ॥ अपि चण्डानिलोद्धूततरङ्गितमहोदधेः । शक्येत प्रसरो रोद्धुं, नानुरक्तस्य चेतसः ॥ १६ ॥ सिरि अंगारो सिंगारओत्ति जंपंति तंपि जइ मुणिणो । ता नूण चंदविंबाओ अग्गिवुट्ठी समुप्पन्ना ॥ १७ ॥

## कामसंबन्धिसूक्तानि ९८

दिया पश्यति नो घूकः, काको नक्तं न पश्यति । अपूर्वः कोऽपि कामान्धो, दिवानक्तं न पश्यति ॥ १ ॥ न पश्यति हि जात्यन्धः, कामान्धो नैव पश्यति । न पश्यति मदोन्मत्तो, अर्थी दोषं न पश्यति ॥ २ ॥ नान्यः कुनयादाधिर्व्याधिर्नान्यः क्षयामयात् । नान्यः सेवकतो दुःखी, नान्यः कामुकतोऽन्धलः ॥ ३ ॥ दृश्यं वस्तु परं न पश्यति जगत्यन्धः पुरोऽवस्थितं, कामान्धस्तु यदस्ति तत्परिहरन् यन्नास्ति तत्पश्यति । कुन्देन्दीवरपूर्णचन्द्रकलशश्रीमल्लतापल्लवानारोप्याशुचिराशिषु प्रियतमागात्रेषु यन्मोदते ॥ ४ ॥ तावन्महत्त्वं पाण्डित्यं, कुलीनत्वं विवेकिता । यावज्ज्वलति नाङ्गेषु,

१ अक्षाणां रसना कर्मणां मोहस्तथा व्रतानां ब्रह्मचर्यं । गुप्तीनां च मनोगुप्तिश्चत्वारो दु खेन जीयते ॥ १३ ॥

हन्त पञ्चेषुपावकः ॥ ५ ॥ किमु कुवलयनेत्राः सन्ति नो नाकनार्यस्त्रिदशपतिरहल्यां तापसीं यत्सिपेवे । हृदयतृणकुटीरे दीप्यमाने स्मराग्नावुचितमनुचितं वा वेत्ति कः पण्डितोऽपि ? ॥ ६ ॥ विकलयति कलाकुशलं हसति शुचिं पण्डितं विडम्बयति । अधरयति धीरपुरुषं क्षणेन मकरध्वजो देवः ॥ ७ ॥ शम्भूस्वयम्भुहरयो हरिणेक्षणानां, येनाऽक्रियन्त सततं गृहकर्मदासाः । वाचामगोचरचरित्रपवित्रिताय, तस्मै नमो वलवते कुसुमायुधाय ॥ ८ ॥ मत्तेभकुम्भदलने भुवि सन्ति शूराः, केचित्प्रचण्डमृगराजवधेऽपि दक्षाः । किं तु ब्रवीमि बलिनां पुरतः प्रसह्य, कन्दर्पदर्पदलने विरला मनुष्याः ॥ ९ ॥ अये चेतोमत्स्य ! भ्रमणमधुना यौवनजले, त्यज स्वच्छन्दत्वं युवतिजलधौ पश्यसि न किम् ? । तनूजालीजालं स्तनयुगलतुम्बीफलयुतं, मनोभूकैवर्तस्तव मरणहेतोर्भ्रमयति ॥ १० ॥

१८ कामे श्लो. १०

## स्त्रीसंबन्धिसूक्तानि १९

तावदेव कृतिनामपि स्फुरत्येप निर्मलविवेकदीपकः । यावदत्र न कुरङ्गचक्षुषा, ताड्यते चटुललोचनाञ्चलैः ॥ १ ॥ सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां, लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव । भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते, यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥ २ ॥ कुङ्कुमपङ्ककलङ्कितदेहा, गौरपयोधरकम्पितहारा । नूपुरहंसरणत्पदपद्मा, कं न वशं कुरुते भुवि रामा ? ॥ ३ ॥ संसारे हयविहिणा,

१९ स्त्रियां श्लो. ५०



१ संसारे हतविधिना महिलारूपेण मण्डितः पाशः । बध्यन्ते जानाना अजानाना अपि बध्यन्ते ॥ ४ ॥

मद्दिलारूयेण मंदिअं पासं । बज्झंति जाणमाणा, अयाणमाणावि बज्झंति ॥ ४ ॥ अहो संसारजालस्य, विपरीतो बध-
क्रमः । न पुनर्जडजन्तूनां, धीवरस्यापि बन्धनम् ॥ ५ ॥ मानो म्लायति पौरुषं विगलति क्लेशः समुन्मीलति, स्थैर्यं
जीर्यति धैर्यमेति विपदं गम्भीरिमा ध्वस्यति । बुद्धिर्भ्राम्यति न प्रशाम्यति रुजा चेतोऽधिकं ताम्यति, व्रीडा क्राम्यति
कामिनीमदिरया मत्तस्य पुंसो द्रुहा ॥ ६ ॥ मदिरातो गुणज्येष्ठा, लोकद्वयविरोधिनी । कुरुते दृष्टिमात्रेण, महिला महिले
जनम् ॥ ७ ॥ संसार! तव पर्यन्तपदवी न दवीयसी । अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥ ८ ॥ स्मितेन भा-
वेन मदेन लज्जया, पराङ्मुखैरर्द्धकटाक्षवीक्षितैः । वचोभिरीर्ष्याकलहेन लीलया, समन्तपाशं खलु बन्धनं स्त्रियः ॥ ९ ॥
संमोहयंति मदयन्ति विडम्बयन्ति, निर्भर्त्सयन्ति रमयन्ति विषादयन्ति । एताः प्रविश्य सदयं हृदयं नराणां, किं नाम
वामनयना न समाचरन्ति? ॥ १० ॥ सनूपुरालक्तकपादताडितो, द्रुमोऽपि यासां विकसत्यचेतनः । तदङ्गसंस्पर्शरसा-
द्रवीकृतो, विलीयते यन्न नरस्तदद्भुतम् ॥ ११ ॥ वातोद्धूतो दहति दहनो देहमेकं नराणां, मत्तो नागः कुपितभुजगो
देहमेकं निहन्ति । ज्ञानं शीलं विनयविभवौदार्यविज्ञानदेहान्, सर्वानर्थान् दहति वनिताऽऽमुष्मिकानैहिकांश्च ॥ १२ ॥
पञ्चाननं परिभवत्युदरेण वेणीदण्डेन कुण्डलिकुलं शशिनं मुखेन । या सा जगत्त्रयजयप्रथिता नताङ्गी, बुद्ध्या कया बत
चतुर्वरचला सभापे? ॥ १३ ॥ हत्वा नृपं पतिमवेक्ष्य भुजङ्गदष्टं, देशान्तरे विधिवशाद्गणिकाऽस्मि जाता । पुत्रं भुजङ्गम-
धिगम्य चितां प्रविष्टा, शोचामि गोपगृहिणी कथमद्य तक्रम्? ॥ १४ ॥ दुरितवनघनाली शोककासारपाली, भवक-
मलमराली पापतोयप्रणाली । विकटकपटपेटी मोहभूपालचेटी, विषयविषभुजङ्गी दुःखसारा कृशाङ्गी ॥ १५ ॥ माणि-

सूक्तमुक्तावल्यां

॥ ७४ ॥

णि वित्तउ माणु करि जित्तउ पिअह सुहाइ । जइ लाखीणि वाहणी तो पहिरिज्जइ पाइ ॥ १६ ॥ आवर्त्तः संशयानामविनयभवनं पत्तनं साहसानां, दोषाणां संनिधानं कपटशतगृहं क्षेत्रमप्रत्ययानाम् । अग्राह्यं यन्महद्भिर्नरवरवृषभैः सर्वमायाकरण्डं, स्त्रीयन्त्रं केन लोके विषममृतमयं धर्मनाशाय सृष्टम्? ॥ १७ ॥ अनृतं साहसं माया, मूर्खत्वमतिलोभता । निःस्नेहत्वनिर्दयत्वे, स्त्रीणां दोषाः स्वभावजाः ॥ १८ ॥ प्रायः पुमांसः सरलस्वभावा, रण्डास्तु कौटिल्यकलाकरण्डाः । ताताद्य याचेत्कथमन्यथाऽस्मिन्, काले वरं केकयनन्दनेयम् ॥ १९ ॥ आहारो द्विगुणः स्त्रीणां, निद्रा तासां चतुर्गुणा । षड्गुणो व्यवसायश्च, कामश्चाष्टगुणः स्मृतः ॥ २० ॥ अणंता पावरासीओ, जाव उदयमागया ।[1]ताव इत्थीत्तणं पत्तं, संम जाणाहि गोअमा! ॥ २१ ॥ पापाकारमिदं वपुर्मलभृतं दृष्टिः सदोषाकुला, वक्त्रं चर्ममयं विगन्धि कलुषं मांसोत्कराभौ स्तनौ । जङ्घाद्यस्थिविभूषितं च सकलं यस्या विरूपं सदा, पश्यन्नप्ययमात्तनोति हृदये रागी कथं संमदम्? ॥ २२ ॥ सुवंशजोऽप्यकृत्यानि, कुरुते प्रेरितः स्त्रिया । स्नेहलं दधि मथ्नाति, पश्य मन्थानको न किम्? ॥ २३ ॥ गृहीतहस्तकः प्रेयान्, प्रेयसीभिर्यरट्टवत् । भ्रमितः पितृमात्रादिस्नेहं दलयति क्षणात् ॥ २४ ॥ उन्मत्तप्रेमसंरम्भादारभन्ते यदङ्गनाः । तत्र प्रत्यूहमाधातुं, ब्रह्माऽपि खलु कातरः ॥ २५ ॥ रे रे यन्त्रक! मा रोदीः, कं कं न भ्रमयन्त्यमूः । भ्रूचापोत्क्षेपमात्रेण, कराकृष्टस्य का कथा? ॥ २६ ॥ दर्शने हरते चित्तं, स्पर्शने हरते बलम् । संगमे हरते वीर्यं, नारी प्रत्यक्षराक्षसी ॥ २७ ॥ स्मृता भवति तापाय, दृष्टा तून्मादकारिणी । स्पृष्टा भवति मोहाय, सा नाम दयिता कथम्? ॥ २८ ॥

[1] अनन्ता पापराशयो यदोदयमागता । तदा स्त्रीत्वं प्राप्तं सम्यग् जानीहि गौतम! ॥ २० ॥

९९ स्त्रिया

श्लो. ५०

॥ ७४ ॥

नरः ॥ २९ ॥ नरः सविभ्रम- यथाऽग्निसंनिधानेन, लाक्षाद्रव्यं विलीयते । धीरोऽपि कृशकायोऽपि, तथा स्त्रीसन्निधौ नरः ॥ ३० ॥ अन्तर्विषमया ह्येता, बहिश्चैव मनोरमाः । गुञ्जाफलसमाकाराः, स्वभावादेव योषितः ॥ ३२ ॥ रक्ता हरन्ति सर्वस्वं, प्राणानपि विरागतः । अहो राग-विरागाभ्यां, कष्टं कष्टा हि योषितः ॥ ३२ ॥ नागरजातिरदुष्टा, शीतो वह्निर्निरामयः कायः । स्वादु च सागरसलिलं, स्त्री कृतशैल्यसंभाव्यम् ॥ ३३ ॥ यो मूर्ध्नि विधृतः कुम्भः, पाशस्तस्यापि योषिता । विधीयते कण्ठपीठे, जलार्थे ही मृगी-दृशा ॥ ३४ ॥ उंन्नयमाणा अखलिअपरक्कम सुपंडिआवि गुणकलिआ । महिलाहिं अंगुलीसु अ नच्चाविज्जंति तेवि नरा ॥ ३५ ॥ गंगाइ वालुअं सायरे जलं हिमवओ अ परिमाणं । जाणंति बुद्धिमंता, महिलाहिअयं न याणंति ॥ ३६ ॥ हृद्गतं चिंतयन्त्यन्यं, प्रियः को नाम योषिताम्?॥ ३७ ॥ एकं वक्त्र-जल्पन्ति सार्द्धमन्येन, पश्यन्त्यन्यं सविभ्रमाः । इत्येवं कुटिलासु कृत्रिमकृतस्नेहासु विलोकनेन वचनेनान्यं परं विभ्रमैर्भ्रूभङ्गस्तनदर्शनप्रभृतिभिर्व्यामोहयन्ति स्त्रियः । इत्येवं कुटिलासु कृत्रिमकृतस्नेहासु तास्वप्यलं, किं रे चित्त! रतिं करोषि विमुखं सिध्यङ्गनासङ्गमात् ॥ ३८ ॥ चतुरः सृजता राजन्नुपायांस्तेन वेधसा । न सृष्टः पञ्चमः कोऽपि, गृह्यन्ते येन योषितः ॥ ३९ ॥ न स्नेहेन न विद्यया न च धिया रूपेण शौर्येण वा, नेर्ष्याचाटु-भयार्थदानविषयक्रोधक्षमामार्दवैः । लज्जायौवनभोगसत्यकरुणासत्त्वादिभिर्वा गुणैर्गृह्यन्ते न विभूतिभिश्च ललना दुःशी-

---

१ उन्नतमाना अस्खलितपराक्रमाः सुपण्डिता अपि गुणकलिताः । महेलाभिरङ्गुलिषु नर्त्यंते तेऽपि नराः ॥ गङ्गाया वालुकां सागरे जलं हिमवतश्च परिमाणम् । जानन्ति बुद्धिमन्तः महिलाहृदयं न जानन्ति ॥ ३६ ॥

लचित्ता यतः ॥ ४० ॥ यदि स्थिरा भवेद्विद्युत्तिष्ठन्ति यदि वायवः । दैवात्तथापि नारीणां, न स्थेम्ना स्थीयते मनः ॥ ४१ ॥ नार्यश्चलाचला एव, यद्यपि स्युर्नियन्त्रिताः । पताका वंशबद्धाऽपि, भ्रमत्येव दिशो दिशम् ॥ ४२ ॥ रहो नास्ति क्षणो नास्ति, नास्ति प्रार्थयिता नरः । तेन नारद! नारीणां, सतीत्वमभिजायते ॥ ४३ ॥ सायर बप्पु मुरारि पिउ, चंदह जेवडु भाउ । लच्छी हींडे घरहिं घरुं, महिला का मज्जाय? ॥ ४४ ॥ वंल्ली[1] नरिंदचित्तं वक्खाणं पाणिअं च महिलाओ । तत्थ य वच्चंति सया, जत्थ य धुत्तेहिं निज्जंति ॥ ४५ ॥ हित्वा श्रीः पुण्डरीकाक्षं, यदेनं सुभगं श्रिता । इतीवायं विरूपाक्षो, गौरीं वपुषि बद्धवान् ॥ ४६ ॥ सुरूपाः पञ्च योद्धारः, पाण्डवाः पतयो मम । तथाऽपि चपलं चेतो, मुने! षष्ठेऽपि धावति ॥ ४७ ॥ सुरूपं पुरुषं दृष्ट्वा, पितरं भ्रातरं सुतम् । देहः क्लिन्दति नारीणामामपात्रमिवाम्भसा ॥ ४८ ॥ नैव स्त्रीणां प्रियः कोऽपि, न चाढ्यो न च रूपवान् । गावस्तृणमिवारण्ये, आकांक्षन्ते नवं नवम् ॥ ४९ ॥ कामिन्यो नीचगामिन्यस्तटिन्य इव निश्चितम् । दारा राज्ञोऽपि यत्तारा:, प्रणयं यान्ति गोपतेः ॥ ५० ॥

१९ स्त्रिया श्लो. ५०

## वेश्यासंबन्धिसूक्तानि १००

१०० वेश्यायां श्लो. ८

कश्चुम्बति कुलपुरुषो, वेश्याऽधरपल्लवं मनोज्ञमपि । चारभटचौरचेटकनटविटनिष्ठीवनशरावम् ॥ १ ॥ या विचित्रविटकोटिनिघृष्टा, मद्यमांसनिरताऽतिनिकृष्टा । कोमला वचसि चेतसि दुष्टा, तां भजन्ति गणिकां न विशिष्टाः ॥ २ ॥

[1] वल्ली नरेन्द्रचित्तं व्याख्यान पानीयं च महिलाः । तत्र च व्रजन्ति सदा, यत्र च धूर्तैः नीयन्ते ॥ ४५ ॥

यच्छन्तीषु गलत्कुष्ठाभिभूताय च। आत्मनाय च दुर्वृत्ताय च जराजीर्णातिलाङ्गाय च, ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च। यच्छन्तीषु
वेश्यां नितम्बजघन-
मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया, पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु को रज्यते? ॥ ३ ॥ वेश्यां नितम्बजघन-
स्तनगुरुभारामारोपयन्नुरसि मूढधियो रताय। संसारवारिनिधिमध्यनिमज्जनाय, संजानते न हि शिलां निजकण्ठ-
बद्धाम् ॥ ४ ॥ वेश्याऽसौ मदनज्वाला, रूपेन्धनसमन्विता। कामिभिर्यत्र हूयन्ते, यौवनानि धनानि च ॥ ५ ॥ विभवो
वीतरागाणां, वैदग्ध्यं कुलयोषिताम्। दाक्षिण्यं वणिजां प्रेम, वेश्यानाममृतं विषम् ॥ ६ ॥ नयणिहिं रोअइ मणि ह-
सइ जणु जाणइ सहु सच्चु। वेस विसिट्ठह तं करइ जं कट्ठह करवत्तु ॥ ७ ॥ नखविक्रियां प्रकुरुते, नाभिनिवेशं जने
प्रकाशयति। नवधूपयोग्यदेहो, मुनिरिव वेश्याजनो भाति ॥ ८ ॥

## विषयसुखसंबन्धिसूक्तानि १०१

विकम्पते हस्तयुगं वपुःश्रीः, प्रयाति दन्ता अपि विद्रवन्ति। मृत्यावुपागच्छति निर्विलम्बं, तथापि जन्तुर्विषयाभिलाषी
॥ १ ॥ भिक्षाशनं तदपि नीरसमेकवारं, शय्या च भूः परिजनो निजदेहमात्रम्। वस्त्रं विशीर्णपटखण्डमयी च कन्था,
हा हा तथापि विषयान् न परित्यजन्ति ॥ २ ॥ विषयगणः कापुरुषं, करोति वशवर्त्तिनं न सत्पुरुषम्। बध्नाति मशक-
मेव हि, लूतातन्तुर्न मातङ्गम् ॥ ३ ॥ अविदितपरमानन्दो, वदति जनो विषय एव रमणीयः। तिलतैलमेव मिष्टं, येन
न दृष्टं घृतं क्वापि ॥ ४ ॥ भल्ला भल्लिम तां करइ जां भल्ला न मिलंति। भल्लाइं भल्ला मिल्या तुल्ला कांइ करंति ॥ ५ ॥
ददति तावदमी विषयाः सुखं, स्फुरति यावदियं हृदि मूढता। मनसि तत्वविदां तु विचारके, क्व विषयाः क्व सुखं क्व

परिग्रहः? ॥ ६ ॥ अवश्यं यातारश्चिरतरमुषित्वाऽपि विषया, वियोगे को? भेदस्त्यजति न जनो यत्स्वयममून् । व्रजन्तः स्वातन्त्र्यात्किमपि परितापाय मनसः, स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ ७ ॥ अवलोअइ[1] गंथत्थं, अत्थं गहिऊण पावए मुक्खं । परलोए देइ दिट्ठी, मुणिवरसारित्थया वेसा ॥ ८ ॥ अजानन् दाहात्म्यं पतति शलभस्तीव्रदहने, स मीनोऽप्यज्ञानाद्बडिशयुतमश्नाति पिशितम् । विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ ९ ॥ तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि, क्षुधार्त्तः सञ् शालीन् कवलयति मांसपाकवलितान् । प्रदीप्ते रागाग्नौ घननिबिडमाश्लिष्यति वधूं, प्रतीकारे व्याधेः सुखमिति विपर्यस्यति जनः ॥ १० ॥ शान्तेऽनन्तमहिम्नि निर्मलचिदानन्दे तरङ्गावलीनिर्मुक्तामृतसागराम्भसि मनागमग्नोऽपि शोचामति । निःसारे मृगतृष्णिकार्णवजलेऽश्रान्तोऽपि मूढः पिबत्याचामत्यवगाहतेऽभिरमते मज्जत्यथोन्मज्जति ॥ ११ ॥

## इन्द्रियदमनसंबन्धिसूक्तानि १०२

आपदां कथितः पन्था, इन्द्रियाणामसंयमः । तज्जयः संपदां मार्गो, येनेष्टं तेन गम्यताम् ॥ १ ॥ यस्य हस्तौ च पादौ च, जिह्वा च सुनियन्त्रिता । इन्द्रियाणि सुगुप्तानि, रुष्टो राजा करोति किम्? ॥ २ ॥ वनेऽपि दोषाः प्रभवन्ति रागिणां, गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः । अकुत्सिते कर्मणि यः प्रवर्त्तते, निवृत्तरागस्य गृहं तपोवनम् ॥ ३ ॥ जितं

१०१ विषयेषु श्लो. ११

१०२ इन्द्रियदमने श्लो. ९



[1] अवलोकयति ग्रन्थार्थं अर्थं गृहीत्वा प्राप्नुयात् मोक्षम् । परलोके ददाति दृष्टिं मुनिवरसदृशी वेश्याः ॥ ८ ॥

निर्जिताऽनिर्जितान्यहो ॥ ४ ॥ उग्रं तपः कपटतामपि लम्भ-
दशार्णभद्रेण, दारितं हरिणा च यत् । हेतुरत्र हृषीकाणि, निर्जिताऽनिर्जितान्यहो ॥ ४ ॥ उग्रं तपः कपटतामपि लम्भ-
यन्ति, कीर्त्युज्ज्वलानि च कुलानि कलङ्कयन्ति । अन्तं नयन्ति परमामपि च प्रतिष्ठां, किं वा न हीन्द्रियजिताः किल
दारयन्ति ॥ ५ ॥ कुरङ्गमातङ्गपतङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च । एकः प्रमादी स कथं न हन्याद्यः सेवते पञ्च-
भिरेव पञ्च ॥ ६ ॥ आत्मानं कुपथेन निर्गमयितुं यः शूकलाश्वायते, कृत्याकृत्यविवेकजीवितहृतौ यः कृष्णसर्पायते ।
यः पुण्यद्रुमखण्डखण्डनविधौ स्फूर्जत्कुठारायते, तं लुप्तव्रतमुद्रमिन्द्रियगणं जित्वा शुभंयुर्भव ॥ ७ ॥ स पण्डितो यः
करणैरखण्डितः, स तापसो यो निजपापतापकः । स दीक्षितो यः सकलं समीक्षते, स धार्मिको यः परमर्म न स्पृशेत्
॥ ८ ॥ दो पंथेहिं न गम्मइ, दोमुह सुई न सीवए कंथं । दुन्नि न हुंति कयाविहु, इंदियसुक्खं च मुक्खं च ॥ ९ ॥

## यौवनसंबन्धिसूक्तानि १०३

प्रथमे वयसि यः शान्तः, स शान्त इति मे मतिः । धातुषु क्षीयमाणेषु, शमः कस्य न जायते? ॥ १ ॥ अतिवाहि-
तमतिगहनं, विनाऽपवादेन यौवनं येन । दोषनिधाने जन्मनि, किं न प्राप्तं फलं तेन? ॥ २ ॥ ये न स्खलन्ति ते
दक्षाः, कृष्णकेशतमोभरे । वार्द्धके तु सदोद्योतः, शिरःस्थपलितेन्दुतः ॥ ३ ॥ यौवने विकरोत्येव, मनः संयमिनामपि ।
राजमार्गेऽपि रोहन्ति, वर्षाकाले किलाङ्कुराः ॥ ४ ॥ यौवनं धनसंपत्तिः, प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय, किं

१ मङ्गलदायकः ॥ २ द्वाभ्यां पथिभ्यां न गम्यते, द्विमुखी सूचिर्न सीव्यति कन्थाम् । द्वे न भवतः कदाऽपि चेन्द्रियसौख्यं च मोक्षश्च ॥ ९ ॥

पुनस्तच्चतुष्टयम्?॥ ५ ॥ भ्रातश्चित्त! सखे विवेक! भगवन्नाचार! रेरे गुणाः, कौलीनत्वमपि क्षमे भगवति! व्रीडे सखि! श्रूयताम्। विद्याभिः परमश्रमेण हि मया नीताः परामुन्नतिं, तत्किं मामवहाय यौवनवने कुत्रापि यूयं गताः? ॥ ६ ॥

१०३ यावने श्लो. ६

## वैराग्यसंबन्धिसूक्तानि १०४

१०४ वैराग्ये श्लो. १२

सव्वं विलविअं गीअं, सव्वं नट्टं विडंवणा। सव्वे आभरणा भारा, सव्वे कामा दुहावहा ॥ १ ॥ पुंसामुन्नतचित्तानां, सुखावहमिदं द्वयम्। सर्वसङ्गनिवृत्तिर्वा, विभूतिर्वा सुविस्तरा ॥ २ ॥ एको वासः पत्तने वा वने वा, एकं मित्रं भूपतिर्वा यतिर्वा। एका भार्या सुन्दरी वा दरी वा, एकं शास्त्रं वैद्यमध्यात्मगं वा ॥ ३ ॥ एकैव काचिन्महतामवस्था, सूक्ष्माणि वस्त्राण्यथवा च कन्था। करामलग्नाऽभिनवा च वाला, गङ्गातरङ्गेष्वथवाऽक्षमाला ॥ ४ ॥ एको रागिषु राजते प्रियतमादेहार्द्धहारी हरो, नीरागेषु जिनो विमुक्तललनासङ्गो न यस्मात्परः। दुर्वारस्मरघस्मरोरगविषव्यामोहमूढो जनः, शेषः कामविडम्बितो न विषयान् भोक्तुं न मोक्तुं क्षमः ॥ ५ ॥ न द्वारि द्विरदा मदाम्बुजलदा नाग्रे कलः पञ्चमः, पञ्चेषोर्विजयप्रपञ्चनकरी नो मन्दिरे सुन्दरी। तत्किं मुग्ध! मुधैव धावसि भवे नाद्यापि किं मुक्तये?, जायन्ते तव सिद्धसिन्धुपुलिनप्रान्तेषु विश्रान्तयः? ॥ ६ ॥ नो धर्माय यतो न तत्र निरता नार्थाय येनेदशाः, कामोऽप्यर्थवतां तदर्थमपि नो पुंसः क्वचित्कस्यचित्। तत्के नाम वयं किमत्र घटिता ज्ञातं पुनः कारणं, जीवन्तोऽपि मृता इवेति वदता शब्दार्थ-

१ सर्वं गीतं विलपितं सर्वं नृत्यं विडम्बना। सर्वाण्याभरणानि भाराः सर्वे कामा दुःखावहाः ॥ १ ॥

गणिका ध्वष्टं नृपं सेवकाः, सर्वः कार्यवशाज्जनोऽभिरमते नो (भोः) कस्य को वल्लभः? ॥ २ ॥ तावच्चिअ [1]सयलजणो, नेहं दरिसेइ जाव निअकज्जं । नियकज्जे संवित्ते, विरला नेहं पवट्टंति ॥ ३ ॥ कृतमिदमिदं करिष्ये, केवलमिति सरलमेव चिन्तयसि । त्रुटिदलितसकलवाञ्छं, विलसितमपि चिन्तय विधातुः ॥ ४ ॥ हा हा दुष्ट! कदर्थितकार्यैः, क्षिप्तं जन्म मुधा व्यवसायैः । काकिण्यर्थे चिन्तारत्नं, हारितमेतदकृत्वा यत्नम् ॥ ५ ॥ यदयं स्वामी यदिदं सद्म, सर्वं चैतन्मिथ्या छद्म । यदयं कान्तो यदियं कान्ता, सोऽयं मोहो हन्त दुरन्तः ॥ ६ ॥ जाताः कति न हि सुखसंबन्धा, न विदन्त्येते जीवा अन्धाः। कटरे मोहनटस्य विलासः, सर्वो नव इव पुनराभासः ॥ ७ ॥ कोऽहं कस्मिन् कथमायातः, का मे जननी को मे तातः? । इति परिभावयतः संसारः, सर्वोऽयं स्वमव्यवहारः ॥ ८ ॥ दाराः परिभवकारा, बन्धुजनो बन्धनं विषं विषयाः । कोऽयं जनस्य मोहो?, ये रिपवस्तेषु सुहृदाशाः ॥ ९ ॥ पुत्रो मे भ्राता मे, स्वजनो मे गृहकलत्रवर्गो मे । इति कृतमेमेशब्दं, पशुमिव मृत्युर्जनं हरति ॥ १० ॥ द्रव्याणि तिष्ठन्ति गृहेषु नार्यो, विश्रामभूमौ स्वजनाः स्मशाने । देहश्चितायां परलोकमार्गे, कर्मानुगो याति स एव जीवः ॥ ११ ॥ ओतुः पयः पश्यति नैव दण्डं, कीरोऽपि शालीन्न च लोष्टखण्डम् । काकः पलं नो बत सिंहतुण्डं, जन्तुस्तथा [2]शं न यमं प्रचण्डम् ॥ १२ ॥ निवृत्ता भोगेच्छा पुरुषबहुमानो विगलितः, समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः । शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने, अहो धृष्टः कायस्तदपि मरणापायचकितः ॥ १३ ॥ मातापितृसहस्राणि, पुत्रदारशतानि च । प्रतिजन्मनि वर्त्तन्ते, कस्य माता पिताऽपि

1 तावदेव सकलजन. स्नेहं दर्शयति यावन्निजं कार्यम् । निजकार्ये संवृत्ते, विरलाः स्नेहं प्रवर्त्तन्ते ॥ ३ ॥ 2 अनादरकृत. 3 कल्याणं.

वा! ॥ २४ ॥ नालिके धकुनाः पुञ्जे, वास्तुदोषाः पशौ छलम् । निःस्वे नाहारदोषाः स्युर्न वैराग्यमसात्त्विके ॥ २५ ॥
स्वच्छेऽपि चित्ते दमितेऽपि चित्ते, ज्ञातेऽपि तत्त्वे गलिते ममत्वे । दुःखैकगेहे विदिते च देहे, तथापि मोहस्तरुणप्ररोहः
॥ २६ ॥ जानामि क्षणभङ्गुरं जगदिदं जानामि तुच्छं सुखं, जानामीन्द्रियवर्गमेतमखिलं स्वार्थैकनिष्ठं सदा । जानामि
स्फुरिताचिरद्युतिचलं विस्फूर्जितं संपदां, नो जानामि तथापि कः पुनरसौ मोहस्य हेतुर्मम? ॥ २७ ॥

अन्तःकरणसंबन्धिसूक्तानि १०६

घृष्टे नेत्रे करौ घृष्टौ, घृष्टा जिह्वा रदैः समम् । घृष्टानि पुस्तकान्यपि, घृष्टं नान्तर्गतं मनः ॥ १ ॥ ए मणु एकज
मक्कड जइ किमइ थिरउ थाइ । यदि लिहावडं लोहडी, तिहुयाणे ऊभिउ बाहु ॥ २ ॥ यदि वहति त्रिदण्डं
नग्नमुण्डं जटां वा, यदि वसति गुहायां वृक्षमूले शिलायाम् । यदि पठति पुराणं वेदसिद्धान्ततत्त्वं, यदि हृदयमशुद्धं
सर्वमेतन्न किंचित् ॥ ३ ॥ अभ्यस्तैः किमु पुस्तकैः किमथवा चेष्टाभिरेकान्ततः, कष्टाभिः किमु देवतादिविषयैः पूजाप्र-
णामादिभिः । चेतश्चेदिदमर्कतूलतरलं शक्येत रोद्धुं चलात्कामेभ्यः करपङ्कजे ननु तदा सौख्यानि सर्वाण्यपि ॥ ४ ॥
तर्कः कन्दलकन्द एष कविता मिथ्यावचोजल्पनं, साहित्यं खलु बन्दिवृन्दपदवी कष्टावहं लक्षणम् । विद्यामण्डलमन्त्रत-
न्त्रविधयः सर्वेऽप्यनर्थप्रदास्तत्त्वं मूढ! निरक्षरं परपदं चेतश्चिरं चिन्तय ॥ ५ ॥ शमार्थं सर्वशास्त्राणि, विहितानि मनी-
षिभिः । तस्मात्स सर्वशास्त्रज्ञो, यस्य शान्तं मनः सदा ॥ ६ ॥ सर्वाः संपत्तयस्तस्य, विशुद्धं यस्य मानसम् । उपानद्गूढ-
पादस्य, ननु चर्मावृतैव भूः ॥ ७ ॥ एकाग्रमनसा ध्याता, देवाः शैलमया अपि । अचिरेणैव तुष्यन्ति, किं पुनश्चेतनो

जनः! ॥ ८ ॥ चित्तायत्तं धातुबद्धं शरीरं, चित्ते नष्टे धातवो यान्ति नाशम् । तस्माच्चित्तं यत्नतो रक्षणीयं, स्वस्थे चित्ते बुद्धयः संभवन्ति ॥ ९ ॥ सत्यपूतं वदेद्वाक्यं, वस्त्रपूतं पिबेज्जलं । दृष्टिपूतं न्यसेत्पादं, मनःपूतं समाचरेत् ॥ १० ॥

ध्यानसंबन्धिसूक्तानि १०७

सत्यं वच्मि हितं वच्मि, सारं वच्मि पुनः पुनः । अस्मिन्नसारे संसारे, सारमात्मवशं मनः ॥ १ ॥ कुलं पवित्रं जननी कृतार्था, वसुन्धरा भाग्यवती च तेन । अवाह्यमार्गे शमसिन्धुमग्नं, लीनं परब्रह्मणि यस्य चेतः ॥ २ ॥ न शब्दशास्त्राभिरतस्य मोक्षो, न बाह्यकाडम्बरबन्धुरस्य । न भोजनाच्छादनविस्मितस्य, न लोकचित्तग्रहणे रतस्य ॥ ३ ॥ एकाग्रचित्तस्य दृढव्रतस्य, पञ्चेन्द्रियप्रीतिनिवर्त्तकस्य । अध्यात्मयोगे गतमानसस्य, मोक्षो ध्रुवं नित्यमहिंसकस्य ॥ ४ ॥ सुकरं मलधारित्वं, सुकरं दुस्तपं तपः । सुकरोऽक्षनिरोधश्च, दुष्करं चित्तरोधनम् ॥ ५ ॥ राज्यमिच्छन्नजित्वाऽरीननाराध्य गुरुं श्रुतम् । अजित्वा च मनो मोक्षं, न प्राप्नोति कथञ्चन ॥ ६ ॥ अहो ध्यानस्य माहात्म्यं, येनैकापि हि कामिनी । अनुरागविरागाभ्यां, शिवाय च भवाय च ॥ ७ ॥ कुणउ तवं पालउ संजमं पढउ सयलसत्थाइं । जाव न झायइ अप्पा, ताव न मुक्खो जिणो भणइ ॥ ८ ॥ तव तविए जव जविए, बहुणा कालेण होइ सिद्धिसुहं । निट्ठविअट्ठकम्मा, झाणेण य तक्खणा सिद्धी ॥ ९ ॥

१ करोतु तपः पालयतु संयमं पठतु सकलशास्त्राणि । यावन्न ध्यायति आत्मानं तावन्न मोक्ष इति जिनो भणति ॥ ८ ॥ तपसि तप्ते जापे जप्ते बहुना कालेन भवति सिद्धिसुखम् । निष्ठिताष्टकर्मा ध्यानेन तत्क्षणात्सिद्धिः ॥ ९ ॥

१०६ अन्तःकरणे श्लो. १०
१०७ ध्याने श्लो. ९

जं गुत्ता । तं नरे वाससयाइं कोडाकोडीहिं नेरइआ ॥ १ ॥ पोरुसिचउत्थ-
नमुआईदसमेहिं मुणिणो कम्मं खिवंति जं गुत्ता । तं नरे वाससयाइं कोडाकोडीहिं नेरइआ ॥ १ ॥ जं नारया न कम्मं खिवंति
छट्ठे काउं कम्मं खिवंति मुणिणोवि । तं नो नारयजीवा वाससयसहस्सलक्खेहिं ॥ २ ॥ सो अ तवो कायव्वो, जेण मणो मंगुलं
बहुएहिं वरिससहसेहिं । तं खलु चउत्थभोई जीवो निज्जरइ सुहभावो ॥ ३ ॥ निरवज्जाहारेणं साहूणं निच्चमेव उववासो । उत्तरगु-
न चिंतेइ । जेण ने इंदियहाणी जेण य जोगा न हायंति ॥ ४ ॥ निरवज्जाहारेणं साहूणं निच्चमेव उववासो । एकीभूयाऽऽत्मना वसिज्जुप-
णवुड्ढिकए तहवि उववासमिच्छंति ॥ ५ ॥ निवसन्ति हृषीकाणि, निवृत्तानि स्वगोचरात् । सग्गापवग्गसुक्खं तेहिं निबद्धं सगंठिंमि ॥ ७ ॥
वासमिमं विदुः ॥ ६ ॥ जे निच्चमप्पमत्ता, गंठिं बंधंति गंठिसहिअंमि । सग्गापवग्गसुक्खं तेहिं निबद्धं सगंठिंमि ॥ ८ ॥ मंसासी मज्जरओ
भणिऊण नमुक्कारं निच्चं विम्हरणवज्जिआ धन्ना । पारंति गंठिसहिअं गंठिं सह कम्मगंठीहिं ॥ ८ ॥

१ नमस्कारादिभिर्दशमान्तैर्मुनयः कर्म क्षपयन्ति यद्गुप्ताः । तद् वर्षशतादिभिः कोटीकोट्यन्तैर्नैरयिकाः ॥ १ ॥ पौरुषीचतुर्थषष्ठभक्तात् कृत्वा कर्म
क्षपयन्ति मुनयोऽपि । तन्न नारकजीवा वर्षशतसहस्रलक्षैः ॥ २ ॥ यन्नारका न कर्म क्षपयन्ति बहुभिर्वर्षसहस्रैः । तत् चतुर्थभोज्येव जीवो निर्जरयति शुभ-
भावः ॥ ३ ॥ तच्च तपः कर्त्तव्यं येन मनो मङ्गुलं न चिन्तयति । येन नेन्द्रियहानिः येन च योगा न हीयन्ते ॥ ४ ॥ निरवद्याहारेण साधूनां नित्यमेवोप-
वासः । उत्तरगुणवृद्धिकृते तथाप्युपवासमिच्छन्ति ॥ ५ ॥ २ ये नित्यमप्रमत्ता ग्रन्थिं बध्नन्ति ग्रन्थिसहितेन । स्वर्गापवर्गसौख्यं, तैर्निबद्धं स्वग्रन्थौ ॥ ७ ॥
भणित्वा नमस्कारं नित्यं विस्मरणवर्जिता धन्याः । पारयन्ति ग्रन्थिसहितं ग्रन्थिं सह कर्मग्रन्थिभिः ॥ ८ ॥ (भिन्दन्तीति) । मांसाशी मद्यरत एकेनैव
ग्रन्थिसहितेन । स हन्त तन्तुवायः सुसाधुवद्वः सुरो जातः ॥ ९ ॥

इक्केणं चेव गंठिसहिएणं । सो हंत तंतुवाओ सुसाहुवाओ सुरो जाओ ॥ ९ ॥ इअ चिंतसु अब्भासं अब्भासं सिवपुरस्स जइ महसि । अणसणसरिसं पुण्णं वयंति एअस्स समयन्नू ॥ १० ॥ थोवंमिवि अवराहे भणिअं अन्नंमि गुरुअ पच्छित्तं । जं इह अप्पं तं खलु मन्ने अब्भासकरणत्थं ॥ ११ ॥ देहदुर्गमुदग्राणि, तावत्कर्माणि देहिनाम् । नोज्झन्ति यावदक्षाम्बुप्रवेशोऽत्र निरर्गलः ॥ १२ ॥ विरज्य विषयेभ्यो यैस्तेपे मोक्षफलं तपः । तैरेव फलमङ्गस्य, जगृहे तत्त्ववेदिभिः ॥ १३ ॥ शरीरशोषणं तीव्रं, न कुर्युर्मुनयस्तपः । पर्यन्तविरसं सर्वं, न स्यात्संसारिणां यदि ॥ १४ ॥ चक्रे तीर्थकरैः स्वयं निजगदे तैरेव तीर्थेश्वरैः, श्रीहेतुर्भवहारि दारितरुजं सन्निर्जराकारणम् । सद्यो विघ्नहरं हृषीकदमनं माङ्गल्यमिष्टार्थकृत्, देवाकर्षणकारि दर्पदलनं तस्माद्विधेयं तपः ॥१५॥ श्रीमद्वीरजिनो दृढप्रहरणः स्वीयप्रतिज्ञादृढः, श्लाघ्यो बाहुबली बलोऽप्यविचलः सन्नन्दिषेणव्रती । आनन्दः सदुपासको व्रतरुचिः सा सुन्दरीत्यादयः, कर्मोन्मूलनकोविदेन तपसा देवासुरैर्वन्दिताः ॥ १६ ॥ पूजालाभप्रसिद्ध्यर्थं, तपस्तप्येत योऽल्पधीः । शोष एव शरीरस्य, न तस्य तपसः फलम् ॥ १७ ॥

तपःप्रभावसूक्तानि १०९

यद्दूरं यद्दुराराध्यं, यच्च दूरे व्यवस्थितम् । तत्सर्वं तपसा साध्यं, तपो हि दुरतिक्रमम् ॥ १ ॥ तपः सकललक्ष्मीणां, नियन्त्रणमशृङ्खलम् । दुरितप्रेतभूतानां, रक्षामन्त्रो निरक्षरः ॥ २ ॥ यस्माद्विघ्नपरम्परा विघटते दास्यं सुराः कुर्वते, कामः

1 इति चिन्तयाभ्यासं अभ्यासं शिवपुरस्य यदि वाञ्छसि । अनशनसदृशं पुण्यं वदन्त्येतस्य समयज्ञाः ॥ १० ॥ स्तोकेऽप्यपराधे भणितमन्यस्मिन् गुरु प्रायश्चित्तम् । यदिह अल्पं तद् मन्येऽभ्यासकरणार्थमेव ॥ ११ ॥

१०८ तपसि श्लो. १७
१०९ तपःप्रभाव श्लो. ५

॥

उन्मीलन्ति महर्द्धयः कलयति ध्वंसं च यत्कर्मणां, स्वाधीनं त्रिदिवं
शाम्यति दाम्यतीन्द्रियगणः कल्याणमुत्सर्पति । यत्पूर्वार्जितकर्मशैलकुलिशं यत्कामदावानलज्वालाजालजलं यदुग्रकरणग्रा-
करोति च शिवं श्लाघ्यं तपस्तन्न किम्? ॥ ३ ॥ माहिमन्त्राक्षरम् । यत्प्रत्यूहतमःसमूहदिवसं यल्लब्धिलक्ष्मीलतामूलं तद् द्विविधं यथाविधि तपः कुर्वीत वीतस्पृहः ॥ ४ ॥
जन्मकोटिकृतमेकहेलया, कर्म तीव्रतपसा विलीयते । किं न दाह्यमतिबह्वपि क्षणादुच्छिखेन शिखिनाऽत्र दह्यते?॥ ५ ॥

## उद्यापनसंबन्धिसूक्तानि ११०

प्रासादे कलशाधिरोपणसमं विम्बे प्रतिष्ठोपमं, पुण्यश्रीस्फुटसंविभागकरणं विभ्रद्धिशिष्टे जने । सौभाग्योपरि मञ्जरी-
प्रतिनिभं पूर्णे तपस्यावधौ, यः शक्त्योद्यमनं करोति विधिना सम्यग्दृशां सोऽग्रणीः ॥ १ ॥ लक्ष्मीः कृतार्था सफलं तपो-
ऽपि, ध्यानं सदोच्चैर्जनबोधिलाभः । जिनस्य भक्तिः क्रमतः शिवश्रीर्गुणाः स्युरुद्यापनतो नराणाम् ॥ २ ॥ वृक्षो यथा
दोहदपूरणेन, कायो यथा सद्रसभोजनेन । विशेषशोभां लभते यथोक्तेनोद्यापनेनैव तथा तपोऽपि ॥ ३ ॥ सूत्राणि
सन्तः सुतपोभिरुच्चैराराध्य कण्ठे दधते तथापि । मालां च सर्वोद्यमनाय नूनं, श्रेयो गुणश्रीयशसां जयस्य ॥ ४ ॥

## भावसंबन्धिसूक्तानि १११

जा दव्वे होइ मई अहवा तरुणीसु रूववंतीसु । सा जइ जिणवरधम्मे, करयलमज्झे ठिआ सिद्धी ॥ १ ॥

१ या द्रव्ये भवति मतिरथवा तरुणीषु रूपवतीषु । सा यदि जिनवरधर्मे करतलमध्ये स्थिता सिद्धिः ॥ १ ॥

तक्कविहूणो विज्जो लक्खणहीणो अ पंडिओ लोए । भावविहूणो धम्मो तिन्निवि नूणं हसिज्जंति ॥ २ ॥ अत्तो देवह भत्तो पाहिल्लो होइ वड्ढ पाहिल्लो । बुद्धी होइ महासइ नइभरी भिराडिआ होइं ॥ ३ ॥ गउं कडेवरु चेईहरी मणु मेल्हेविणु हट्टि । डुहुं लाहां एकू नहि सूली हुइ ससट्टि ॥ ४ ॥ थोवंपि अणुट्ठाणं भावविसुद्धं हणेइ कम्ममलं । लहुओवि सहसकिरणो तिमिरनिअम्बं पणासेइ ॥ ५ ॥ शेषाण्यंगानि दानादीन्येवं धर्मनरेशितुः । तस्य तेष्वधुना जीवो, भावनामा निगद्यते ॥ ६ ॥ भावो धर्मस्य हृन्मित्रं, भावः कर्मेन्धनानलः । सत्कृत्यान्ने घृतं भावो, भावो वेत्री शिवश्रियः ॥ ७ ॥ दानशीलतपःसम्पद्भावेन भजते फलम् । स्वादः प्रादुर्भवेद्भोज्ये, किं नाम लवणं विना ? ॥ ८ ॥ भावस्यैकाङ्गवीरस्य, सान्निध्याद्भवः शिवम् । ययुर्नैकोऽपि दानाद्यैर्भावहीनैर्घनैरपि ॥ ९ ॥ वित्तेन दीयते दानं, शीलं सत्त्वेन पाल्यते । तपोऽपि तप्यते कष्टात्स्वाधीनोत्तमभावना ॥ १० ॥ चिरादेकेन दानादिक्लेशैः पुण्यं यदर्जितम् । तस्यानुमोदनाभावारक्षणादन्यस्तदर्जयेत् ॥ ११ ॥ भावात्सुकृतलेशोऽपि, नृणां सर्वार्थसिद्धिदः । भ्रष्टानां तु ततो नूनं, सर्वतो भ्रष्टता यतः ॥ १२ ॥ धनं दत्तं वित्तं जिनवचनमभ्यस्तमखिलं, क्रियाकाण्डं चण्डं रचितमवनौ सुप्तमसकृत् । तपस्तप्तं तीव्रं चरणमपि चीर्णं चिरतरं, न चेच्चित्ते भावस्तुषवपनवत्सर्वमफलम् ॥ १३ ॥ चक्री श्रीभरतो बलानुगमृगः श्रेयानिलापुत्रको, जीर्णश्रेष्ठिमृगावतीगृहपतिर्यो भावदेवाभिधः । सा श्लाघ्या मरुदेवता नवमुनिः श्रीचण्डरुद्रस्य चेल्याद्याः कस्य न चित्र-

१ तर्कविहीनो वैद्यो लक्षणहीनश्च पण्डितो लोके । भावविहीनो धर्मो नूनं हस्यन्ते त्रीण्यपि ॥ २ ॥ २ स्तोकमपि अनुष्ठानं भावविशुद्धं हन्ति कर्ममलम् । लघुरपि सहस्रकरः तिमिरनितम्बं प्रणाशयति ॥ ५ ॥

११० उद्यापने श्लो. ४

१११ भावे श्लो. १५

कारिचरिता भावेन संभूषिताः ॥ १४ ॥ न काष्ठे विद्यते देवो, न शिलायां न कर्दमे । भावेषु विद्यते देवस्तस्माद्भावो हि कारणम् ॥ १५ ॥

## क्रोधसंबन्धिसूक्तानि ११२

सन्ति सन्तः किं न सन्ति?, सन्ति चेत्तन्निवेद्यताम् । किं कुप्यन्ति न कुप्यन्ति, ते कुप्यन्ति कतीदृशाः? ॥ १ ॥ जं अज्जिअं चरित्तं देसूणाए अ पुव्वकोडीए । तंपि कसाइयमित्तो हारेइ नरो मुहुत्तेणं ॥ २ ॥ ओसरि करिसणु कुणवि कलहु, गुज्झु पयासिसि दार । वहूए सरिसउं रुसणउं करसि तउ मरसि गमार!॥ ३ ॥ अपूर्वः कोऽपि कोपाग्निः, सज्जनस्य खलस्य च । एकस्य शाम्यति स्नेहाद्वर्द्धतेऽन्यस्य वारितः ॥ ४ ॥ न भवति भवति च न चिरं भवति चिरं चेत्फले विसंवदति । कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥ ५ ॥ नाकारणरुषां संख्या, संख्याताः कारणक्रुधः । कारणेऽपि न कुप्यन्ति, ये ते जगति पञ्चषाः ॥ ६ ॥ तं नत्थि घरं तं नत्थि राउलं देउलंपि तं नत्थि । जत्थ अकारणकुविआ दो तिन्नि खला न दीसंति ॥ ७ ॥ संतापं तनुते भिनत्ति विनयं सौहार्दमुच्छादयत्युद्वेगं जनयत्यवद्यवचनं सूते विधत्ते कलिम् । कीर्तिं कृन्तति दुर्गतिं वितरति व्याहन्ति पुण्योदयं, दत्ते यः कुगतिं स हातुमुचितो रोषः सदोषः सताम् ॥ ८ ॥ क्रोधो नाम मनुष्यस्य, शरीराज्जायते रिपुः । येन त्यजन्ति मित्राणि, धर्माच्च परिहीयते ॥ ९ ॥ न कश्चिच्चण्डकोपाना-

---

१ यदर्जितं चारित्रं देशोनया पूर्वकोट्या च । तदपि कषायितमात्रो हारयति नरो मुहूर्तेन ॥ २ ॥ २ तन्नास्ति गृहं तन्नास्ति राजकुलं देवकुलमपि तन्नास्ति । यत्राकारणकुपिता द्वित्राः खला न दृश्यन्ते ॥ ७ ॥

मात्मीयोऽस्तीह भूतले। होतारमपि जुह्वानं, स्पृष्टो दहति पावकः॥ १० ॥ परस्परात्मगोत्रस्थविग्रहः सर्वनाशकृत्। अन्योऽन्यकाष्ठसंघर्षभवो वह्निर्न किं दहेत्? ॥ ११ ॥ अइतज्जणा न कायव्वा, पुत्तकलत्तेसु सामिए भिच्चे। दहिअंपि महिज्जंतं छंडइ देहो न संदेहो ॥ १२ ॥ क्षमी यत्कुरुते कार्यं, न तत्क्रोधवशंवदः। कार्यस्य साधनी प्रज्ञा, सा च क्रोधेन नश्यति ॥ १३ ॥ कोकिलानां स्वरो रूपं, नारीरूपं पतिव्रता। विद्या रूपं कुरूपाणां, क्षमा रूपं तपस्विनाम् ॥ १४ ॥ पढमं चिअ रोसभरे जा बुद्धी होइ सा न कायव्वा। किंपाकफलाणंपिव न सुंदरो तीइ परिणामो ॥१५॥ कोहो पीइं० ॥ लागइ कोहपलेवणइ डज्झइ गुणरयणाइ। उवसमजलि जि न ओल्हवइ सहइं ति दुक्खसयाइं ॥१६॥ पाणिमांहि पलेवणउं काहु जाणइ कोइ। अब्भितरि भटके वलइ बाहिरि धुमु न होइ ॥ १७ ॥

## क्षांतिसंबन्धिसूक्तानि ११३

क्षमावतामयं लोकः, परश्चैव क्षमावताम्। इह सन्मानमर्हन्ति, परत्र च शुभां गतिम् ॥ १ ॥ एकः क्षमावतां दोषो, द्वितीयो नोपपद्यते। यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ २ ॥ क्षमाखड्गं करे यस्य, दुर्जनः किं करिष्यति?। अतृणे पतितो वह्निः, स्वयमेव विनश्यति ॥ ३ ॥ यस्य क्षान्तिमयं शस्त्रं, क्रोधाग्नेरुपशामकम्। नित्यमेव जयस्तस्य, शत्रूणामुदयः कुतः? ॥ ४ ॥ श्रूयते श्रीमहावीरः, क्षान्त्यै म्लेच्छेषु जग्मिवान्। अयत्नेनागतां क्षान्तिं, वोढुं किमिति नेश्वरः?

१ अतितर्जना न कर्तव्या पुत्रकलत्रेषु स्वामिनि भृत्ये। दध्यपि मथ्यमानं त्यजति देहं न संदेहः ॥ १२ ॥ २ प्रथममेव रोषभरे या बुद्धिर्भवति सा कर्तव्या। किम्पाकफलानामिव न सुन्दरस्तस्याः परिणामः ॥ १५ ॥

११२ क्रोधे श्लो. १७
११३ क्षान्तौ श्लो. ९

॥ ५ ॥ मन्निन्दया यदि जनः परितोषमेति, नन्वप्रयासजनितोऽयमनुग्रहो मे । श्रेयोऽर्थिनो हि पुरुषाः परतुष्टिहेतोर्दुः-
स्वार्जितान्यपि धनानि परित्यजन्ति ॥ ६ ॥ ददतु ददतु गालीर्गालिमन्तो भवन्तो, वयमिह तदभावाद्गालिदानेऽप्यशक्ताः,
जगति विदितमेतद्दीयते विद्यमानं, ददति खरविषाणं किं महात्यागिनोऽपि ? ॥ ७ ॥ प्रायः सर्वसहस्यापि, भवेयुर्मित्रश-
त्रवः । तापैः क्ष्मां शोषयेद् ग्रीष्मो, वर्षा तोयैश्च पोषयेत् ॥ ८ ॥ मुनेरपि वनस्थस्य, स्वीयकर्माणि कुर्वतः । उत्पद्यन्ते
त्रयः पक्षा, मित्रोदासीनशत्रवः ॥ ९ ॥

## मानसंबन्धिसूक्तानि ११४

मुष्णाति यः कृतसमस्तसमीहितार्थसंजीवनं विनयजीवितमङ्गभाजाम् । जात्यादिमानविषजं विषमं विकारं, सन्मार्द-
वामृतरसेन नयस्व शान्तिम् ॥ १ ॥ औचित्याचरणं विलुम्पति पयोवाहं नभस्वानिव, प्रध्वंसं विनयं नयत्यहिरिव प्राण-
स्पृशां जीवितम् । कीर्तिं कैरविणीं मतङ्गज इव प्रोन्मूलयत्यञ्जसा, मानो नीच इवोपकारनिकरं हन्ति त्रिवर्गं नृणाम् ॥२॥
अधमा धनमिच्छन्ति, धनमानौ च मध्यमाः । उत्तमा मानमिच्छन्ति, मानो हि महतां धनम् ॥ ३ ॥ कुसुमस्तबकस्येव,
वृत्तिर्द्वयं मनस्विनः । मूर्ध्नि वा सर्वलोकस्य, शीर्यते वन एव वा ॥ ४ ॥ तावदाश्रीयते लक्ष्म्या, तावदस्य स्थिरं यशः ।
पुरुषस्तावदेवासौ, यावन्मानान्न हीयते ॥ ५ ॥ एक एव खगो मानी, सुखं जीवति चातकः । पिपासितो वा म्रियते,
याचते वा पुरन्दरम् ॥ ६ ॥ मानिनो हतदर्पस्य, लाभोऽपि न सुखावहः । जीवितं मानमूलं हि, माने म्लाने कुतः
सुखम् ? ॥ ७ ॥ क्षताक्षतात्ममानस्य, मानिनो मरणं वरम् । न चापि क्षतमानस्य, कल्पान्तमपि जीवितम् ॥ ८ ॥ वरं

प्राणपरित्यागो, मा मानपरिखण्डना । मृत्युस्तत्क्षणिका पीडा, मानखण्डे दिने दिने ॥ ९ ॥ न सदश्वाः कशाघातं, न सिंहा घनगर्जितम् । परैरङ्गुलिनिर्देशं, न सहन्ते मनस्विनः ॥ १० ॥ ब्रूत नूतनकूष्माण्डफलानां के भवन्त्यमी । अङ्गुलीदर्शनाद्येन, विलीयन्ते मनस्विनः ॥ ११ ॥

११४ माने श्लो. ११

## मायासंबन्धिसूक्तानि ११५

११५ मायायां श्लो. ९

आचार्येषु नटे धूर्त्ते, व्यासवेश्याबहुश्रुते । षट्सु माया न कर्त्तव्या, माया तत्रैव निर्मिता ॥ १ ॥ कुशलजननवन्ध्यां सत्यसूर्यास्तसन्ध्यां, कुगतियुवतिमालां मोहमातङ्गशालाम् । शमकमलहिमानीं दुर्यशोराजधानीं, व्यसनशतसहायां दूरतो मुञ्च मायाम् ॥ २ ॥ मायामविश्वासविलासमन्दिरं, दुराशयो यः कुरुते धनाशया । सोऽनर्थसार्थं न पतन्तमीक्षते, यथा बिडालो लगुडं पयः पिबन् ॥ ३ ॥ विधाय मायां विविधैरुपायैः, परस्य ये वञ्चनमाचरन्ति । ते वञ्चयन्ति त्रिदिवापवर्गसुखान्महामोहसखा स्वमेव ॥ ४ ॥ मायाशीलः पुरुषो यद्यपि न करोति किञ्चिदपराधम् । सर्प इवाविश्वास्यो भवति तथाप्यात्मदोषहतः ॥ ५ ॥ मायासीलह माणुसह किमु पत्तिज्ज णु जाइ । नीलकंठु महुरं लवइ सविसभुअंगम खाइ ॥६॥ शनैरुद्धरते पादं, जीवानामनुकम्पया । पश्य लक्ष्मण! पम्पायां, बकः परमधार्मिकः ॥ ७ ॥ पृष्ठतः सेवयेदर्कं, जठरेण हुताशनम् । स्वामिनं सर्वभावेन, परलोकममायया ॥ ८ ॥ तद्भोजनं यद्गुरुदत्तशेषं, सा प्राज्ञता या न करोति पापम् । तत्सौहृदं यत्क्रियते परोक्षे, दम्भैर्विना यः क्रियते स धर्मः ॥ ९ ॥

## वक्रत्वसंबन्धिसूक्तानि ११६

कार्या कार्याय कस्मैचित्सरलैरपि वक्रता । ऋजुतां वस्तुनो वेत्ति, किं चक्षुः कूणनं विना ॥ १ ॥ वक्रत्वेन यथा लोके,
गौरवं नार्जवे तथा । द्वितीयायां शशी वन्द्यः, पूर्णिमायां यतो न हि ॥ २ ॥ नात्यन्तसरलैर्भाव्यं, गत्वा पश्य वनस्प-
तीन् । छिद्यन्ते सरलास्तत्र, कुब्जास्तिष्ठन्ति पादपाः ॥ ३ ॥ नातीव मृदुना भाव्यं, मृदुः सर्वत्र बाध्यते । निःसारां
कदलिं दृष्ट्वा, छेत्तुं को न समुद्यतः? ॥ ४ ॥ नातिनीचैर्न चाप्युच्चैर्भवितव्यं फलार्थिना । स्तोकं नत्वा पिबन्नम्भः, कुम्भः
प्राप्नोति पूर्णताम् ॥ ५ ॥

## व्यसनसंबन्धिसूक्तानि ११७

द्यूतं च मांसं च सुरा च वेश्या, पापर्द्धिचौर्ये परदारसेवा । एतानि सप्त व्यसनानि लोके, घोरातिघोरं नरकं नयन्ति
॥ १ ॥ द्यूताद्राज्यविनाशनं नलनृपः प्राप्तोऽथवा पाण्डवा, मद्यात्कृष्णनृपश्च राघवपिता पापर्द्धितो दूषितः । मांसाच्छ्रे-
णिकभूपतिश्च नरके चौर्याद्विनष्टा न के?, वेश्यातः कृतपुण्यको गतधनोऽन्यस्त्रीहृतो रावणः ॥ २ ॥ वैरवैश्वानरव्याधि-
वादव्यसनलक्षणाः । महानर्थाय जायन्ते, 'वकाराः' पञ्च वर्द्धिताः ॥ ३ ॥ द्यूतं सर्वापदां धाम, द्यूतं दिव्यन्ति दुर्धियः ।
द्यूतेन कुलमालिन्यं, द्यूताय श्लाघतेऽधमः ॥ ४ ॥ राज्यच्युतिं वल्लभया वियोगं, द्यूतान्नलः प्राप गतोरुभोगम् । प्रचण्ड-
ताभण्डितबाहुदण्डास्ते पाण्डवाः प्रापुररण्यवासम् ॥ ५ ॥ खड्गकुण्डादिकान् दृष्ट्वा, द्यूतव्यसनपोषकान् । श्रेष्ठिसूर्मुमुचे

द्यूतं, न पुनर्गुरुवाक्यतः ॥ ६ ॥ करघंटा नह पंडुरा सज्जण दूरीहूय । सूनां देउल सेविअइं तुज्झ पसाइं जूय ॥ ७ ॥

११६ वक्रत्वे श्लो. ५.
११७ व्यसने श्लो. ७
११८ वैद्ये श्लो. १८

वैद्यसंबन्धिसूक्तानि ११८

आयुर्वेदकृताभ्यासः, सर्वज्ञः प्रियदर्शनः । आर्यशीलः प्रसन्नात्मा, एष वैद्योऽभिधीयते ॥ १ ॥ व्याधेस्तत्त्वपरिज्ञानं, वेदनायाश्च निग्रहः । एतद्वैद्यस्य वैद्यत्वं, न वैद्यः प्रभुरायुपः ॥ २ ॥ रोगं रोगनिदानं, रोगचिकित्सां च रोगमुक्तत्वम् । जानाति सम्यगेतद्वैद्यो नायुःप्रदो भवति ॥ ३ ॥ कालज्ञानविदां वरो मधुरवाक् शान्तः शुचिः शास्त्रवित्, धीरो धर्मपरो निदानचतुरो रोगप्रयोगे पटुः । संतुष्टः सदयोऽपमृत्युभयहृन्मृत्युक्षणज्ञो गुणी, संमूढः प्रतिकारकर्मणि न यो वन्द्यः स वैद्योत्तमः ॥ ४ ॥ यस्य तस्य तरोर्मूलं, येन तेन प्रघृष्य च । यस्य तस्य प्रदातव्यं, यद्वा तद्वा भविष्यति ॥ ५ ॥ चितां प्रज्वलितां दृष्ट्वा, वैद्यो विस्मयमागतः । नाहं गतो न मे भ्राता, कस्येदं हस्तलाघवम्? ॥ ६ ॥ पढेसु पुत्त! विज्जयं तीरसंडभुज्जयं । जइ मरइ कम्मयं जीवइ तउ रोकदम्मयं ॥ ७ ॥ आतुरे वित्तहरणं, मृते चाशु पलायनम् । एतद्वैद्यस्य वैद्यत्वं, न वैद्यः प्रभुरायुपः ॥ ८ ॥ वैद्यराज ! नमस्तुभ्यं, यमभ्रातृसहोदरः । यमो हि हरति प्राणान्, द्रव्यप्राणहरो भिषग् ॥ ९ ॥ प्रच्छन्ना यमदूता, इव प्रभूताः कलौ न के वैद्याः? । शास्त्रवित्तरलबुद्धिः, सरलः परलोकभीर्विरलः ॥१०॥ कुसङ्गिनं सद्गतिरस्तपुण्यं, पद्मा दरिद्रं पैणपद्मनेत्रा । क्षुद्रं क्षमेर्ष्याविषमं मृगाक्षी, वैद्यान् कृपा नाश्रयते कदापि ॥ ११ ॥

१ अधमीः. २ वेश्या.

यो व्याधिभिर्ध्यायति वाध्यमानं, जनौघमादातुमना धनानि । व्याधीन् विरुद्धौषधतोऽस्य वृद्धिं, नयेत्कृपा तत्र कुतोऽस्तु
वैद्ये? ॥ १२ ॥ रसायनैः सार्द्धमिहौषधानि, तदत्र वासान्मम मंदता न । इतीव वैद्यस्य हृदन्तरालं, लोभः पटुत्वं कलयन्न
मुञ्चेत् ॥ १३ ॥ प्रत्यूषसं वीक्ष्य पुरीषमूत्रदुर्गन्धसंबन्धवशेन मन्ये । सद्धर्मगन्धः सुरभिस्वभावो, विजृम्भते नो भिषजा-
ङ्गणेषु ॥ १४ ॥ प्राप्नोति धर्मार्थयशांसि धर्माच्चिकित्सकः सञ्चरयं ( संरचयं ) श्चिकित्साम् । अर्थार्थितः केवलमर्थमेव,
निषेवते धर्मयशोनिशुम्भी ॥ १५ ॥ अभूमिजमनाकाशं, रसास्वादविवर्जितम् । सुलभं रोगनिर्नाशि, वद वैद्य! किमौ-
षधम्? ॥ १६ ॥ पौषे मासे निराहारा, बह्वाहाराश्च कार्त्तिके । चैत्रे मासे गुडाहारा, भवन्तु तव शत्रवः ॥१७॥ अत्यम्बु-
पानाद्विषमासनाच्च, दिवाशयाज्जागरणाच्च रात्रौ । संधारणान्मूत्रपुरीषयोश्च, षड्भिः प्रकारैः प्रभवन्ति रोगाः ॥ १८ ॥

## नृपसंबन्धिसूक्तानि ११९

दुष्टस्य दण्डः सुजनस्य पूजा, न्यायेन कोशस्य च संप्रवृद्धिः । अपक्षपातो रिपुराष्ट्ररक्षा, पञ्चैव यज्ञाः कथिता नृपा-
णाम् ॥ १ ॥ दुष्टानां दमनं नयानुगमनं स्वीयप्रजापालनं, नित्यं देवमहर्षिपादनमनं षड्दर्शनीमाननम् । औचित्याच-
रणं परोपकरणं त्यागं सुभोगं श्रियां, कुर्वाणो नृपतिः श्रिया निजपतिः सत्येव नो मुच्यते ॥ २ ॥ यस्तेजस्वी यशस्वी
शरणगतजनत्राणकर्मप्रवीणः, शास्ता शश्वत्खलानां क्षतरिपुनिवहः पालकः स्वप्रजानाम् । दाता भोक्ता विवेकी नयपथ-
पथिकः सुप्रतिज्ञः कृतज्ञः, प्राज्यं राज्यं स राजा प्रथयाते पृथिवीमण्डलेऽखण्डिताज्ञः ॥ ३ ॥ नरकान्तं तदा राज्यं,

यदि राजा न धार्मिकः। धार्मिके तु परं तत्र, सौख्यमत्र परत्र च ॥ ४ ॥ सच्छंदं जंपिज्जइ, किज्जइ जं जं मणस्स पडिभाइ। अलिअं च सच्चविज्जइ, पहुत्तणं तेण रमणिज्जं ॥ ५ ॥ राज्ञि धर्मिणि धर्मिष्ठाः, पापे पापाः समे समाः। राजानमनुवर्त्तन्ते, यथा राजा तथा प्रजाः ॥ ६ ॥ शैशवेऽभ्यस्तविद्यानां, यौवने विषयैषिणाम्। वार्द्धके मुनिवृत्तीनां, योगेनान्ते तनुत्यजाम् ॥ ७ ॥ क्षमी दाता गुणग्राही, स्वामी दुःखेन लभ्यते। अनुकूलः शुचिर्दक्षः, स्वामिन्! भृत्योऽपि दुर्लभः ॥ ८ ॥ सेवा गुरौ तदादिष्टग्रहः पुरुषसंग्रहः। शौर्यं धर्मश्च पञ्चामी, राज्यलक्ष्मीलताम्बुदाः ॥ ९ ॥ आपन्नस्यार्त्तिहरणं, शरणागतरक्षणम्। त्यागः पुण्यानुरागश्च, राज्यलक्ष्मीलताम्बुदाः ॥ १० ॥ न च भोगान्न च त्यागान्न चाऽऽधेर्न च रोगतः। प्रजासंतापनान्नूनं, क्षीयन्ते क्षितिपश्रियः ॥११॥ दुर्बलानामनाथानां, बालवृद्धतपस्विनाम्। अनार्यैः परिभूतानां, सर्वेषां पार्थिवो गतिः ॥ १२ ॥ धर्मः क्षोणीभृतां शिष्टपालनं दुष्टनिग्रहः। मात्स्यो न्यायोऽन्यथा नूनं, भवेद्भुवनघस्मरः ॥ १३ ॥ न्यायो धर्मो दर्शनानि, तीर्थानि सुखसंपदः। यस्याऽऽधारे प्रवर्त्तन्ते, स जीयात्पृथिवीपतिः ॥ १४ ॥ पार्थिवानामलङ्काराः, प्रजानामेव पालनम्। किरीटकटकोष्णीषैर्भूष्यन्ते केवलं नटाः ॥ १५ ॥ शठदमनमशठपालनमाश्रितभरणं च राजचिह्नानि। अभिषेकपट्टबन्धौ, बालव्यजनं व्रणस्यापि ॥ १६ ॥ प्रजानां धर्मषड्भागो, राज्ञो भवति रक्षितुः। अधर्मस्यापि षड्भागो, जायते यो न रक्षति ॥ १७ ॥ लोकेभ्यः करमादाता, चौरेभ्यस्तानरक्षिता। तदीयैर्लिप्यते राजा, पातकैरिति हि स्मृतिः ॥ १८ ॥ अकरे करकर्त्ता च, गोसहस्रवधाधभृत् ( धकृतः )। प्रवृत्तकरविच्छेदे, गवां

१ स्वच्छन्द जल्प्यते क्रियते यद्यन् मनसि प्रतिभाति। अलिकं च सत्याप्यते, प्रभुत्वं तेन रमणीयम् ॥ ५ ॥

... रक्षति ? ॥ २० ॥
... शरणमागते । निजपृष्ठानुगं ध्वान्तं, प्रदीपः किं न रक्षति ? ॥ २० ॥
कोटिफलं भवेत् ॥ १९ ॥ कार्यं शत्रावपि प्राणत्राणं शरणमागते । ... प्रभुचेतसः ॥ २१ ॥ मा स्म सन्धिं विजानन्तु,
जलधेरपि कल्लोलाश्चापल्यानि कपेरपि । शक्यन्ते यत्नतो रोद्धुं, न पुनः प्रभुचेतसः ॥ २१ ॥ मा स्म सन्धिं विजानन्तु, षट्कर्णो भिद्यते मन्त्रश्चतुःकर्णश्च
मा स्म जानन्तु विग्रहम् । आख्यातं यदि शृण्वन्ति, भूपास्तेनैव पण्डिताः ॥ २२ ॥ षट्कर्णो भिद्यते मन्त्रश्चतुःकर्णश्च
धार्यते । द्विकर्णस्य तु मन्त्रस्य, ब्रह्माऽप्यन्तं न गच्छति ॥ २३ ॥ स्वच्छन्दं छन्दवृत्त्या ये, रञ्जयन्ति महीपतिम् । ते
पाययन्ति सर्पींषि, कुवैद्या इव सज्वरम् ॥ २४ ॥ सर्वत्र सुलभा राजन् !, सततं प्रियवादिनः । अप्रियस्य तु पथ्यस्य,
वक्ता श्रोता च दुर्लभः ॥ २५ ॥ यज्ञे हता ये पशवो म्रियन्ते, त एव भूपा इति वेदवाचः । तेनैव संस्कारवशेन तेषां,
गतो विवेकः पृथिवीपतीनाम् ॥ २६ ॥ अविज्ञातविशेषस्य, सर्वतेजोऽपहारिणः । स्वामिनो निर्विवेकस्य, तमसश्च किम-
न्तरम् ? ॥ २७ ॥ कामः क्रोधस्तथा हर्षो, माया लोभो मदस्तथा । षड्वर्गमुत्सृजेदेनं, तत्र त्यक्ते सुखी नृपः ॥ २८ ॥
आज्ञाभङ्गो नरेन्द्राणां, वृत्तिच्छेदो द्विजन्मनाम् । पृथक् शय्या च नारीणामशस्त्रो वध उच्यते ॥ २९ ॥ रिक्तपाणिर्न
पश्येच्च, राजानं भिषजं गुरुम् । नैमित्तिकं स्वमविदं, फलेन फलमादिशेत् ॥ ३० ॥ गन्तव्यं राजकुले द्रष्टव्या राजपू-
जिता लोकाः । यद्यपि न भवन्त्यर्थास्तथाप्यनर्था विलीयन्ते ॥ ३१ ॥ घटवत्सरिपूर्णोऽपि, विदग्धो रागवानपि । ग्रहीतुं
शक्यते केन, पार्थिवः कर्णदुर्बलः ? ॥ ३२ ॥

मन्त्रिसंबन्धिसूक्तानि १२०

षट्कर्णो भिद्यते मन्त्रश्चतुःकर्णस्तु धार्यते । द्विकर्णस्य तु मन्त्रस्य, ब्रह्माऽप्यन्तं न गच्छति ॥ १ ॥ आतुरे व्यसने

प्राप्ते, दुर्भिक्षे शत्रुविग्रहे । राजद्वारे श्मशाने च, यस्तिष्ठति स बान्धवः ॥ २ ॥ अनिष्टे दुर्मतिं दद्यात्तयाऽसौ नरकं व्रजेत् । तस्मात्सर्वप्रयत्नेन, इष्टं धर्मे नियोजयेत् ॥ ३ ॥ भावस्निग्धैरुपकृतमिति द्वेष्यतामेति किञ्चित्, शाठ्यादन्यैः परकृतमपि प्रीतिमेवोपयाति । दुर्ग्राह्यत्वान्नृपतिमनसां नैकभावाश्रयाणां, सेवाधर्मः परकृतमपि प्रीतिमेवोपयाति ॥ ४ ॥ नरपतिहितकर्त्ता द्वेष्यतामेति लोके, जनपदहितकर्त्ता त्यज्यते पार्थिवेन । इति महति विरोधे वर्त्तमाने समाने, नृपतिजनपदानां दुर्लभः कार्यकर्त्ता ॥ ५ ॥ अहो अहीनामपि खेलनेभ्यो, दुःखानि दूरं नृपसेवनानि । एकोऽहिना मृत्युमुपैति दष्टः, सपुत्रपौत्रस्तु नृपेण दष्टः ॥ ६ ॥ अश्वतरीणां गर्भो, दुर्जनमैत्री नियोगिनां लक्ष्मीः । स्थूलत्वं श्वयथुभवं, विना विकारेण न भवन्ति ॥ ७ ॥ नाऽऽस्ये सर्पस्य रुधिरं, न च दृष्टं कलेवरे । न प्रजासु न भूपाले, धनं दुरधिकारिणि ॥ ८ ॥ प्रोक्तः प्रत्युत्तरं नाऽऽह, विरुद्धं प्रभुणा च यः । न समीपे हसत्युच्चैः, स भवेद्राजवल्लभः ॥ ९ ॥ राजमातरि देव्यां च, कुमारे मुख्यमन्त्रिणि । पुरोहिते प्रतीहारे, वर्त्तव्यं राजवत्सदा ॥ १० ॥ वरं वनं वरं भिक्षा, दुर्द्धरं मरणं वरम् । वरं व्याधिर्मनुष्याणां, नाधिकारेण संपदः ॥ ११ ॥ एकया मुद्रया स्तोकान्, मुद्रा पञ्चकमाप्यते । पाणौ पादे मुखे कण्ठे, गेहे सा म्रियते कथम्? ॥ १२ ॥ राहुः सुधाप्रवृद्धः, शिरसि विलूनेऽपि शशिनमनुसरति । विदितविपदोऽपि कष्टं, लब्धास्वादा निवर्त्तन्ते ॥ १३ ॥ अधिकारात्त्रिभिर्मासैर्मठापत्यात् त्रिभिर्दिनैः । शीघ्रं नरकवाञ्छा चेद्दिनमेकं पुरोहितः ॥ १४ ॥ अहो अपूर्वं चरितं, योगिनां च नियोगिनाम् । क्षणात्परं पदं प्राप्य, पश्यन्त्यात्ममयं जगत् ॥ १५ ॥ नृपव्यापारपापेभ्यः, स्वीकृतं सुकृतं न यैः । तान् धूलिधावकेभ्योऽपि, मन्ये दुष्टतरान्नरान् ॥ १६ ॥ प्राप्य चलानधि-

कारान्, शत्रौ मित्रे च बन्धुवर्गे च । नापकृतं नोपकृतं, न सत्कृतं किं कृतं तेन ? ॥ १७ ॥ प्राज्ञे नियोजितेऽमात्ये,
मर्दायस्य गुणत्रयम् । यशः स्वर्गनिवासश्च, पुष्कलश्च धनागमः ॥ १८ ॥ कुलशीलगुणोपेतं, सत्यधर्मपरायणम् । रूपिणं
सुप्रसन्नं च, राजाऽध्यक्षं तु कारयेत् ॥ १९ ॥ शीलवृत्तिधरो धीरः, सर्वरत्नपरीक्षकः । शुचिरव्यभिचारी च, भाण्डाध्य-
क्षोऽभिधीयते ॥ २० ॥ इङ्गिताकारतत्त्वज्ञः, प्रियवाक् प्रियदर्शनः । सकृदुक्तग्राही दक्षः, प्रतीहारः प्रशस्यते ॥ २१ ॥
चित्तज्ञः शीलसंपन्नो, वाग्मी दक्षः प्रियंवदः । यथोक्तवादी स्मृतिमान्, दूतः स्यात्सप्तभिर्गुणैः ॥ २२ ॥ वेदसिद्धान्त-
तत्त्वज्ञो, जपहोमपरायणः । आशीर्वादपरो नित्यमेष राज्ञः पुरोहितः ॥ २३ ॥ अरैः संधार्यते नाभिर्नाभौ चाराः प्रति-
ष्ठिताः । स्वामिसेवकयोरेवं, वृत्तिचक्रं प्रवर्त्तते ॥ २४ ॥

## सेवकसंबन्धिसूक्तानि १२१

सेवा श्ववृत्तिराख्याता, न तैः सम्यगुदाहृतम् । श्वा करोति हि पुच्छेन, मूर्धा चाटूनि सेवकः ॥ १ ॥ मौनान्मूर्खः
प्रवचनपटुर्वातुलः स्वल्पको वा, क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः । धृष्टः पार्श्वे भवति यदिवा दूरतोऽप्य-
प्रगल्भः, सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ २ ॥ शूली जातः कदशनवशाद्भैक्ष्ययोगात्कपाली, वस्त्राभावा-
द्विगतवसनः स्नानदौःस्थ्याज्जटावान् । इत्थं सर्वं त्वदनुगमनादीश्वरत्वं मयाऽऽप्तं; अद्यापि त्वं मम नरपते !
नार्द्धचन्द्रं ददासि ? ॥ ३ ॥ सेवया धनमिच्छद्भिः, सेवकैः पश्य यत्कृतम् । स्वातन्त्र्यं यच्छरीरस्य, मूढैस्तदपि

द्यारितम् ॥ ४ ॥ हीनमत्ति पुरो याति, निशि जागर्त्ति चाटुमान् । द्वारे तिष्ठति दीनात्मा, धिकष्टं श्वेव सेवकः ॥ ५ ॥ शिरसा धार्यमाणोऽपि, सोमः सोमेन शम्भुना । तथापि कृशतां धत्ते, कष्टं खलु पराश्रयः ॥ ६ ॥ तुल्यार्थं तुल्यसामर्थ्यं, मर्मज्ञं व्यवसायिनम् । अर्द्धराज्यहरं भृत्यं, यो न हन्यात्स हन्यते ॥ ७ ॥

## पुत्रसंबन्धिसूक्तानि १२२

उत्पतन्निपतन् रिङ्खन्, हसंल्लालावलीर्वमन् । कस्याश्चिदेव धन्यायाः, क्रोडमायाति नन्दनः ॥ १ ॥ शर्वरीदीपकश्चन्द्रः, प्रभाते रविदीपकः । त्रैलोक्यदीपको धर्मः, सुपुत्रः कुलदीपकः ॥ २ ॥ एकेन वनवृक्षेण, पुष्पितेन सुगन्धिना । वासितं तद्वनं सर्वं, सुपुत्रेण कुलं यथा ॥ ३ ॥ एकेनापि हि शूरेण, पादाक्रान्तं क्षमातलम् । क्रियते भास्करेणेव, स्फारस्फुरिततेजसा ॥ ४ ॥ एकोऽपि यः सकलकार्यविधौ समर्थः, सत्त्वाधिको भवति किं बहुभिः प्रसूतैः? । चन्द्रः प्रकाशयति दिङ्मुखमण्डलानि, तारागणः समुदितोऽप्यसमर्थ एव ॥ ५ ॥ योऽवश्यं पितुराचारः, पुत्रस्तमनुवर्त्तते । न हि केतकिवृक्षस्य, भवत्यामलकी फलम् ॥ ६ ॥ स एव पुत्रः पुत्रो यः, कुलमेव न केवलम् । पितुः कीर्त्तिं च धर्मं च, गुणांश्चापि विवर्द्धयेत् ॥ ७ ॥ परिवर्त्तिनि संसारे, मृतः को वा न जायते? । स जातो येन जातेन, याति वंशः समुन्नतिम् ॥ ८ ॥ लालयेत्पञ्च वर्षाणि, दश वर्षाणि ताडयेत् । प्राप्ते च षोडशे वर्षे, पुत्रं मित्रमिवाऽऽचरेत् ॥ ९ ॥ लालनाद्बहवो दोषास्ताडनाद्बहवो गुणाः । तस्मात्पुत्रं च शिष्यं च, ताडयेन्न च लालयेत् ॥ १० ॥ माता शत्रुः पिता वैरी, बालो येन न

१२१ सेवके श्लो. ७
१२२ पुत्रे श्लो. २४

पाठितः । न शोभते सभामध्ये, हंसमध्ये बको यथा ॥ ११ ॥ पितृभिस्ताडितः पुत्रः, शिष्यस्तु गुरुशिक्षितः । घनाहतं
सुवर्णं च, जायते जनमण्डनम् ॥ १२ ॥ अजातमृतमूर्खेभ्यो, मृताऽजातौ वरं सुतौ । यतस्तौ स्वल्पदुःखाय, यावज्जीवं
जडः पुनः ॥ १३ ॥ किं तया क्रियते धेन्वा?, या न सूते न दुग्धदा । कोऽर्थः पुत्रेण जातेन?, यो न विद्वान् न भक्ति-
मान् ॥ १४ ॥ शृण्वन्ति पितुरादेशं, ते केऽपि विरलाः सुताः । आदिष्टं ये तु कुर्वन्ति, सन्ति ते यदि पञ्चषाः ॥ १५ ॥
ते पुत्रा ये पितुर्भक्ताः, स पिता यस्तु पोषकः । तन्मित्रं यत्र विश्वासः, सा भार्या यत्र निर्वृतिः ॥ १६ ॥ जनिता चोप-
नेता च, यस्तु विद्यां प्रयच्छति । अन्नदः प्राणदश्चेति, पिता पञ्चविधः स्मृतः ॥ १७ ॥ राज्ञः पत्नी गुरोः पत्नी, मित्र-
पत्नी तथैव च । पत्नीमाता स्वमाता च, पञ्चैता मातरः स्मृताः ॥ १८ ॥ पुत्तिहिं जाइं कवणु गुण को वा अगुण मुएण ।
जिणि बप्पीकी भुंहडी चंपिज्जइ अवरेण ॥ १९ ॥ अलिअं जंपेइ जणो पुत्तो जं होइ तायसारिच्छो[1] । अत्थमिए रविबिंबे
खणमिक्कं सणिच्छरो तवओ ॥ २० ॥ उपाध्याया दशाचार्य, आचार्याणां शतं पिता । सहस्रं तु पितुर्माता, गौरवेणा-
तिरिच्यते ॥ २१ ॥ आस्तन्यपानाज्जननी पशूनामादारलम्भावधि चाधमानाम् । आगेहकर्मावधि मध्यमानामाजीविता-
त्तीर्थमिवोत्तमानाम् ॥ २२ ॥ माता पशूनां सुतसत्तयैव, धनार्जनैस्तुष्यति मध्यमानाम् । वीरावदातैः पुनरुत्तमानां,
लोकोत्तमानां चरितैः पवित्रैः ॥ २३ ॥ उपकर्त्ता कलाचार्यो, भर्त्ता माता पिता गुरुः । नैते धिक्कारमर्हन्ति, गर्हितानां
शतैरपि ॥ २४ ॥

---

१ अलिकं जल्पति जनो यत् पुत्रो भवति तातसदृक्षः । अस्तमिते रविबिंबे क्षणमेकं शनैश्चरस्तपतु ॥ २० ॥

## पुत्रीसंबन्धिसूक्तानि १२३

जातेति पूर्वं महती हि चिन्ता, कस्य प्रदेयेति ततः प्रवृद्धा । दत्ता सुखं स्थास्यति वा नवेति, कन्यापितृत्वं किल हन्त कष्टम् ॥ १ ॥ जम्मंतीए सोगो, वड्ढंतीए य वड्ढए चिंता । परिणीयाए दंडो, जुवइपिआ दुक्खिओ निच्चं ॥ २ ॥ निअपरसोसा परगेहमंडणी कलिकलंककुलभवणं । जेहिं न जाया धूया, ते सुहिआ जीवलोअंमि ॥ ३ ॥ चोरा चिल्लका पुण गंधी भट्टा य वड्ढ पाहूणया । वेसा धूअ नरिंदा परस्स पीडा न याणंति ॥ ४ ॥ कुलं च शीलं च सनाथता च, विद्या च वित्तं च वपुर्वयश्च । वरे गुणाः सप्त विलोकनीयास्ततः परं भाग्यवशा च कन्या ॥ ५ ॥ मूर्खनिर्धनदूरस्थशूरमोक्षाभिलाषिणाम् । त्रिगुणाधिकवर्षाणां, चापि देया न कन्यका ॥ ६ ॥ अन्तःस्नेहादशनवसनस्नानताम्बूलचेपैः, संप्रीणन्ती दुहितरमिव प्रेक्षते या वधूटीम् । भक्तिग्राह्या मधुरवचना पुत्रिशिक्षासु दक्षा, श्वश्रूरेवं गुणगणयुता प्राप्यते पुण्ययोगात् ॥ ७ ॥ निर्व्याजा दयितादौ, भक्ता श्वश्रूषु वत्सला स्वजने । स्निग्धा च बन्धुवर्गे, विकसितवदना कुलवधूटी ॥ ८ ॥ शय्योत्साटनगेहमार्जनपयःपावित्र्यचुल्लीक्रियास्थालीक्षालनधान्यपेषणकलागोदोहतन्मन्थनैः । पाकैस्तत्परिवेषणैः समुचितैः पात्रादिशौचक्रियाश्वश्रूभर्तृननान्द्रदेवृविनयैः कष्टं वधूर्जीवति ॥ ९ ॥ मितं ददाति हि पिता, मितं भ्राता मितं सुतः । अमितस्य हि दातारं, भर्त्तारं का न पूजयेत्? ॥ १० ॥ चन्द्रचन्दनकर्पूरगोस्तनीशर्करादयः । एतेषां सार-

१ जायमानायां शोको वर्धमानायां वर्धते चिन्ता । परिणीतायां दण्डः युवतिपिता दुःखितो नित्यम् ॥ २ ॥ निजगृहशोषा परगृहमण्डनी च कलिकलङ्ककुलभवनम् । यैर्न जाता दुहिता ते सुखिता जीवलोके ॥ ३ ॥

मुद्धृत्य, अनन्या जनितं मनः ॥ ११ ॥ तीर्थानामष्टषष्टिश्च, विख्याता धरणीतले । तेषां भागीरथी श्रेष्ठा, ततोऽपि ज-
ननी मता ॥ १२ ॥ पतिता गुरवस्त्याज्या, माता न तु कथञ्चन । गर्भधारणपोषाभ्यां, यतो माता गरीयसी ॥ १३ ॥
पतिव्रता पतिप्राणा, पत्युः प्रियहिते रता । यस्य स्यादीदृशी भार्या, स धन्यः पुरुषो भुवि ॥ १४ ॥ पङ्गुमन्धं च कुब्जं
च, कुष्ठाङ्गं व्याधिपीडितम् । आपत्सु च गतं नाथं, न त्यजेत्सा महासती ॥ १५ ॥ क्रीडां शरीरसंस्कारं, समाजोत्सव-
दर्शनम् । हास्यं परगृहे यानं, त्यजेत्प्रोषितभर्तृका ॥ १६ ॥ द्वारोपवेशनं नित्यं, गवाक्षावेक्षणं तथा । असत्प्रलापो हास्यं
च, दूषणं कुलयोषिताम् ॥ १७ ॥ लज्जा दया दमो धैर्यं, पुरुषालापवर्जनम् । एकाकित्वपरित्यागो, नारीणां शीलरक्षणम्
॥ १८ ॥ पिता रक्षति कौमारे, भर्ता रक्षति यौवने । पुत्राश्च स्थाविरे भावे, न स्त्री स्वातन्त्र्यमर्हति ॥ १९ ॥ नदीतटेषु
ये वृक्षा, या च नारी निराश्रया । मन्त्रिहीनाश्च राजानो, न भवन्ति चिरायुषः ॥ २० ॥ वरं कारागृहक्षिप्तो, वरं देशा-
न्तरभ्रमी । वरं नरकसंचारी, न द्विभार्यः पुनः पुमान् ॥ २१ ॥ अभूषितो गृहाद्याति, नामोत्यम्बुच्छटामपि । अक्षा-
लितपदः शेते, भार्याद्वयचरो नरः ॥ २२ ॥ एका भार्या त्रयः पुत्रा, द्वे हले दश धेनवः । ग्रामे वासः पुरासन्ने, स्वर्गादपि
विशिष्यते ॥ २३ ॥ यस्य पुत्रा वशे भक्ता, भार्या छन्दानुवर्त्तिनी । विभवेष्वपि संतोषः, स्वर्गस्तस्य इहैव हि ॥ २४ ॥ वरं
रङ्कफलभत्यं, वरं वैधव्यवेदना । वरं नरकवासो वा, मा सपत्न्याः पराभवः ॥ २५ ॥ फोडीनामुहु सीअली विसहु जु
महुरउं नाम । सउ किह नामु जु वहिनडी ए तिखिवि खय जाउ ॥ २६ ॥ सपत्नीनां शते वासः, पुत्रस्यापि न दर्श-
नम् । न्याय्ये कालेऽपि न स्वेच्छा, ही जन्म नृपयोषिताम् ॥ २७ ॥ एते शतं वयं पञ्च, यावद्वैरं परस्परम् । परैस्तु परि-

भूतानां, वयं पञ्चोत्तरं शतम् ॥ २८ ॥ यं दृष्ट्वा वर्द्धते स्नेहः, क्रोधश्च परिहीयते । स विज्ञेयो मनुष्येण, एष मे पूर्वबान्धवः ॥ २९ ॥ यं दृष्ट्वा वर्द्धते क्रोधः, स्नेहश्च परिहीयते । स विज्ञेयो मनुष्येण, एष मे पूर्वशत्रुकः ॥ ३० ॥

## शौचसंबन्धिसूक्तानि १२४

देवयात्राविवाहेषु, संभ्रमे राजदर्शने । संग्रामे हट्टमार्गे च, स्पृष्टास्पृष्टिर्न दुष्यति ॥ १ ॥ उत्सृष्टं शिवनिर्माल्यं, वमनं मृतचर्मकम् । काकविष्ठासमुत्पन्नं, पञ्च पावित्र्यभाजनम् ॥ २ ॥ छुट्टइय घग्घुरी वकुला य अन्नंपि अद्धसिद्धं वा । जह होइ इह न छुत्ती तज्जलमवसावणाइ तहा ॥ ३ ॥ जह य पसूआ नारी जरिआई मलगेवि पिअंता । उण्होदगं न दूसइ किं पुण कोरन्नधवणाइ ? ॥ ४ ॥ जत्थ जलं तत्थ वणं जत्थ वणं तत्थ निच्छओ तेओ । तेऊवाऊ सहगया तसा य पच्चक्खया चेव ॥ ५ ॥

## स्वरुचिसंबन्धिसूक्तानि १२५

जो जाणइ जस्स गुणे, लोए सो तस्स आयरं कुणइ । फलिए दक्खारामे, काओ लिंबोहलिं चुणइ ॥ १ ॥ बहु मीठी

---

१ दुग्धं गंगा मधु चित्रकचर्म पिप्पलः. २ छुटितो हयो घुर्घुरो वकुलश्च अन्नमर्धसिद्धं वा । यथा भवत्यत्र नाशौचं तज्जलमवश्रामणादि तथा ॥ ३ ॥ यथा च प्रसूता नारी जरितादि मलकेनापि पिबन्ती । उष्णोदकं न दूष्यति किं पुनः कोद्रवधावनादि ॥ ४ ॥ यत्र जलं तत्र वनस्पतिः यत्र वनस्पतिस्तत्र नियमात्तेजः । तेजोवायू सहगतौ त्रसाश्च प्रत्यक्षा एव ॥ ५ ॥ ३ यो जानाति यस्य गुणान् लोके स तस्यादरं करोति । फलिते द्राक्षारामे, काकः निम्बोलिकां भक्षयति ॥ १ ॥

सगु धीमर्दी मउई निद न भंति । जं रुचइ तं रुअघवं छेआ एड भणंति ॥ २ ॥ यदेव रोचते यस्य, तदेव तस्य सुन्द-
रम् । क्षीरखण्डे न तथा प्रीतिर्यथा कद्रस्य भस्मनि ॥ ३ ॥ रुद्रो नग्नः कविः काणः, शनिः पंगुः शशी क्षयी । रामो दुःखी
वर्जिते, न दुःखं पञ्चभिः सह ॥ ४ ॥ सर्वथा स्वहितमाचरणीयं, किं करिष्यति जनो बहुजल्पः[1] । विद्यते स न हि
चभ्रितुपायः, सर्वलोकपरितोषकरो यः ॥ ५ ॥

## प्रकीर्णं तथाऽन्योक्तौ सूक्तानि १२६

ग्रामो वृत्त्यावृतः स्यान्नगरमुरु चतुर्गोपुरोद्भासिशोभं, खेटं नद्यद्रिवेष्टं परिवृतमभितः कर्वटं पर्वतेन । ग्रामैर्युक्तं मडम्बं
दलितदशशतैः पत्तनं रत्नयोनिर्द्रोणाख्यं सिन्धुवेलावलयितमथ संबाधनं चाद्रिशृङ्गे ॥ १ ॥ मतिरप्राप्तविषया, बुद्धिः
साम्प्रतदर्शिनी । अतीते च स्मृतिर्ज्ञेया, प्रज्ञा कालत्रये पुनः ॥ २ ॥ हावो मुखविकारः स्याद्भावश्चित्तसमुद्भवः । विलासो
नेत्रजो ज्ञेयो, विभ्रमो भ्रूसमुद्भवः ॥ ३ ॥ अनवस्थितचित्तानां, प्रसादोऽपि भयङ्करः । सर्पिण्यत्ति किल स्नेहात्स्वाप-
त्यानि न वैरतः ॥ ४ ॥ यद्यपि स्वच्छभावेन, दर्शयत्यम्बुधिर्मणीन् । तथापि जानुदघ्नोऽयमिति चेतसि मा कृथाः ॥ ५ ॥
टङ्कच्छेदे न मे दुःखं, न दाहे न च घर्षणे । एतदेव महद्दुःखं, गुञ्जया सह तोलनम् ॥ ६ ॥ स्थानं सर्वस्य दातव्यमे-
कचारापराधिनः । द्वितीयपतने दन्ता, वक्त्रेणापि विवर्जिताः ॥ ७ ॥ न विना मधुमासेन, अन्तरं पिककाकयोः ।
वसन्ते च पुनः प्राप्ते, काकः काकः पिकः पिकः ॥ ८ ॥ मणिर्लुठतु पादाग्रे, काचः शिरसि धार्यताम् । परीक्षककरप्राप्तः,

[1] चित्रमासम्.

काचः काचो मणिर्मणिः ॥ ९ ॥ वायुना यत्र नीयन्ते, कुञ्जराः षष्टिहायनाः । गावस्तत्र न गण्यन्ते, मशकस्य च का कथा? ॥ १० ॥ यवागूजरणे जाड्यं, मोदकानां तु कथा । वचनेऽपि दरिद्रत्वं, धनाशा तत्र कीदृशी? ॥ ११ ॥ मृगारिं वा मृगेन्द्रं वा, हरिं व्याहरतां जनः । तस्य द्वयमपि व्रीडा, क्रीडादलितदन्तिनः ॥ १२ ॥ यदि नाम सर्षपकणं, शक्नोति करी करेण नादातुम् । इयतैव तस्य ननु किं, पराक्रमग्लानिरिह जाता? ॥ १३ ॥ संकुञ्चन्ति कलौ तुच्छाः, प्रसरन्ति महाशयाः । ग्रीष्मे सरांसि शुष्यन्ति, कामं वारिधिरेधते ॥ १४ ॥ स्त्रीणामपि वचः कालेऽनुकूलं मन्यते बुधैः । दुर्गा वामगता किं न, शस्यते मार्गगामिभिः? ॥ १५ ॥ यद्यपि न भवति हानिः, परकीयां चरति रासभे द्राक्षाम् । असमञ्जसं च दृष्ट्वा, तथापि नः खिद्यते चेतः ॥ १६ ॥ अतिपरिचयादवज्ञा, भवति विशिष्टेऽपि वस्तुनि प्रायः । लोकः प्रयागवासी, कूपे स्नानं समाचरति ॥ १७ ॥ अपूर्वः खण्डवृत्तोऽपि, द्वितीयेन्दुरिवार्च्यते । सपूर्वः पूर्णवृत्तोऽपि, पूर्णेन्दुरिव नार्च्यते ॥ १८ ॥ अपसरणमेव युक्तं, मौनं वा तत्र राजहंसस्य । कटु रटति निकटवर्त्ती, वाचालष्टिट्टिभो यत्र ॥ १९ ॥ हे बालकोकिल! करीरमरुस्थलीषु, किं दुर्विदग्ध! मधुरध्वनिमातनोषि । अन्यः स कोऽपि सहकारतरुप्रदेशो, यस्मिन्नयन्ति तव विभ्रमभाषितानि ॥ २० ॥ व्यलीकमस्तु मा वाऽस्तु, लोकोक्तिस्तु सुदुस्सहा । भाजनं भज्यतां मा वा, टणत्कारस्तु मारयेत् ॥ २१ ॥ अकार्ये तथ्ये वा भवति वितथे वा किमपरं, प्रतीतो लोकेऽस्मिन् हरति महिमानं जनरवः । तुलोपीर्णस्यापि प्रकटनिहताशेषतमसो, रवेस्तादृक् तेजो न हि भवति कन्यां गत इति ॥ २२ ॥ कैज्जंमि समावडिए, अणु-

१ कार्ये समापतिते अनुवसंयस्व दुर्जनं प्रयत्नेन । किं न पीयते निम्बः शरीरसंरक्षणार्थाय ॥ २३ ॥

१२६ प्रकीर्णऽन्योक्तौ च श्लो. ६८

कइ अगइ पुन्नाणं पयत्तेणं। कीस न पिज्जइ नेिंबो, सरीरसंरक्खणट्ठाए ?॥२३॥ रेवा ! हा मग्गेण वह, मत उनमूलि पलास। कहे जडहु धम्मी, करण पराइ आस ॥ २४ ॥ '१रे कारिल्लि हयासे, चडिआ निंबंमि पायवे पउरे । अहवा तुज्झ न दोसो, सरिसा सरिसेहिं रज्जंति ॥ २५ ॥ अन्नो कोवि सहावो, समुद्दगंभीरयाइ भावस्स । अमयं विसं हुआसो, समयं चिअ जेण धरिआइं ॥ २६ ॥ जइ मंडलेण भसिअं, हत्थिं दट्ठूण रायमग्गंमि । ता किं गयस्स जुत्तं, सुणहेण समं कलिं काउं ? ॥ २७ ॥ यदि काको गजेन्द्रस्य, विष्ठां कुर्वीत मूर्द्धनि । कुलानुरूपं तत्तस्य, यो गजो गज एव सः ॥ २८ ॥ अस्मान् विचित्रवपुषश्चिरपृष्ठिलग्नान्, कस्माद्विमुञ्चसि विभो ! यदि वा विमुञ्च । हाहेति केकिवर ! हानिरियं तवैव, भूपालमूर्द्धनि पुनर्भविता स्थितिर्नः ॥ २९ ॥ शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता, किं ब्रूमः शुचितां व्रजन्ति सुधियः स्पर्शेन यस्यापरे । किं चातः परमस्ति ते स्तुतिपदं यज्जीवितं देहिनां, त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ॥ ३० ॥ अच्छउ दूरे राओ रांकू नो अपमानियइ । डाभू फोडइ पाउ भाउ मागइ ठोकिउ ॥ ३१ ॥ अयुक्तो गुणयुक्तस्य, धनुषः प्राणिनां वधः । युक्त एव हि खड्गस्य, यस्योत्पत्तिः कुशीलता ॥ ३२ ॥ २रेयणायरस्स न हु होइ तुच्छिमा निग्गएहिं रयणेहिं । तहवि हु चंदसरिच्छा, विरला रयणायरे रयणा ॥ ३३ ॥ वने रतिर्विरक्तानां,

---

१ हे कारिल्लि ! हताशे चटिता निम्बे पादपे प्रचुरे । अथवा तव न दोषः, सदृशाः सदृशी रज्यन्ते ॥ २५ ॥ अन्यः कोऽपि स्वभावः समुद्रगम्भीरतायाः भावस्य । अमृतं विषं हुताशः समकं तेनैव ध्रियन्ते ॥ २६ ॥ यदि मण्डलेन भषितं हस्तिनं दृष्ट्वा राजमार्गे । तत् किं गजस्य युक्तं, शुना समं कलिं कर्तुम् ? ॥ २७ ॥ २ रत्नाकरस्य नैव भवति तुच्छता निर्गतैः रत्नैः । तथापि च चन्द्रसदृशा विरलानि रत्नाकरे रत्नानि ॥ ३३ ॥

रक्तानां च जने रतिः । अनवस्थितचित्तानां, न वने न जने रतिः ॥ ३४ ॥ प्रातः पूष्णो भवति महिमा नोपतापाय यस्मात्कालेनास्तं क इह न गताः? के न यास्यन्ति चान्ये? । एतावत्तु व्यथयति यदा लोकबाह्यैस्तमोभिस्तस्मिन्नेव प्रकृतिमलिनैर्व्योम्नि लब्धोऽवकाशः ॥ ३५ ॥ तां चंदा तां चांदणी, जां नवि ऊगे सूर । तां डकां तां डकुली, जाम न वज्जइ तूर ॥ ३६ ॥ असारस्य पदार्थस्य, प्रायेणाडम्बरो महान् । न हि स्वर्णे ध्वनिस्तादृग्, यादृक् कांस्येऽभिवीक्ष्यते ॥ ३७ ॥ न नव्यं पुस्तकं श्रेष्ठं, न चैतल्लोकरञ्जकम् । न तस्य जल्पतो लोकैः, प्रमाणीक्रियते वचः ॥ ३८ ॥ नादरं कुरुते कोऽपि, निर्वपस्य जगत्रये । आडम्बरेण पूज्यन्ते, सर्वत्र न गुणा जनैः ॥ ३९ ॥ दुद्दर रडिअं महिसीण कडक्खयं सेवडाण मंतणयं । खमणाण य वक्खाणं सडंबरो निप्फलो चेव ॥ ४० ॥ रासह रडिअं कुनरिंद जंपिअं इअरलोअपडिवन्नं । पढमं चिअ गुरुआइं । पच्छा लहुआइं लहुआइं ॥ ४१ ॥ काचा चिणा न चाविआ नयरि न दीधी अग्गि । वंभण पंच न न मारिआ किमु जाएवउ सग्गि? ॥ ४२ ॥ वंभण धोइ म धोनिआ पत्थरि चीरु म फाडी । धोए पंचइ इंदिआ, जहिं जूजूई मुहाडि ॥ ४३ ॥ काचा घटरे साचा जाणि लालंता जड घाठा । ते नर दिण दिण दिठा देखत पेखत नाठा ॥ ४४ ॥ काचा घटरे काचा जाणि साचइ संजमि पइठा । साचइ साचउं मानिउं तेहिं जाई सीवपुरी वइठा ॥ ४५ ॥ मंत्र न मूझी जडी न औषध जाप न जोग जनोइ । प्राणिडा रहे दुखभर जाता राखणहार न कोइ ॥ ४६ ॥ संसारि फीरतइ जीवइं लाधा माणुसना भवसारा । प्रमाद मुकी पुण्य करो रे जिम पामो भवपारा ॥ ४७ ॥ लोचन जाणे जगि जोउंरे जोगी जोइ आपा । आप जोयंता जगि जाणुरे लोचन हुआ निकलापा ॥ ४८ ॥ जागि न जोगी ए नर सुता ते

खूता ॥ ४९ ॥ काया चाया मनु मेहणुरे जोगी जोगवि
अधिगुत्ता पूया । जोय न जोगी किमरु छईरे मूढ मायाजालि खूता ॥ ४९ ॥ आगम वेद पुराणरे पोथा मरणे आथा ओथा । आप
निद्रा । दंडज गोटी कंथक छोटी ए नहि जोगी मुद्रा ॥ ५० ॥ आगम वेद पुराणरे पोथा मरणे आथा ओथा । आविया
ज्ञान विणु शरु सद्गुरे जाणे थोथा मोथा ॥ ५१ ॥ जिहां तुम्हे जास्यो ते तुम्हे जोउ जे गया ते मत रोओ । जीणे
जिहां तिहां मनडु टाळो आपइ आप पपालो ॥ ५२ ॥ एकलो आसि एकलो जासि म करि जीव! मोह कूडा । कृत्रिम वस्तु
दीपे सुख दहिपरे ते करि दया धर्म रुडा ॥ ५३ ॥ भीतरि भंग भलि परि जाणि बाहिर रंग म जोइ । अहवा आवागमनी-
सगल विचारत बाहिरी वहुळी होइ ॥ ५४ ॥ आगिमठाणं जोइ न जोगी जोइ न परमं ज्ञानं । देखत पेखत जग जायरे
धारण जोइ न परमं ध्यानं ॥ ५५ ॥ जोगी जोइ न जग विचारा अथिर संसार असारा । माय न मारी आपणी रे किम जाएवुं
पुत्र कलत्र परिवारा ॥ ५६ ॥ बांभण पंच न मारिआरे गांमि न लाई आगे । आंबा चार न सींचिआ हो किम जाइ लोकंते ? ॥ ५८ ॥
सगे ॥ ५७ ॥ काचा घणा न चाविआरे जीभ न खंडिअ दांते । सातं व्यसन न पोसिआरे दुख न देखइ लेस ॥ ५९ ॥ तेजीय पवन
जिणइरि जूअ न खेलिओरे घरि न आणि वेस । सातं व्यसन न पोसिआरे दुख न देखइ लेस ॥ ५९ ॥ तेजीय पवन
दामिआरे घाग न खाचि गाढी । नवइ नाद न जाणिआरे गोरषि ते नर काढी ॥ ६० ॥ मांकुड एक न मारिओरे आ-
हुती दीधी न देवे । मांडिआं मूंडे न नामीई हो कांइ करुं कलेवे ॥ ६१ ॥ नागां सउडि निवाईइरे, आगि बलइ हि-
मालइ । आटइ लाकड घालीइहो, जोगी राख न लाइ ॥ ६२ ॥ जोगी जोग धंधोलीओरे, सारउं काहु न देपइ ।
जो नर नारि न गांजीओ हो, गोरपी दीधओ लेपइ ॥ ६३ ॥ चोर च्यारि मइं मारिआरे, घरिआ त्रिणि व्यापारि ।

पंचइं धन ओदालिओरे, साधु लोक साधारि ॥ ६४ ॥ मांकड हंस मनाविआरे, खाणि एक खंखालि । त्रिणि रयण तलि राखिआंरे, सिव मारग अजुआलि ॥ ६५ ॥ निर्म्मल नीर न पामीओरे, सील सनाह न कीध । नदी मांहि न नाहिओरे, मोरु काज न कीध ॥ ६६ ॥ गाडुं गामि न खेडिउंरे, नीर न पीधुं जाडु । जातइं जंतु न टालिआहो, नरग थिउ तस आडु ॥ ६७ ॥ बांभणि कादम कुंथिउंरे, माहि चुमल नवि धोयु । नदी नीर न निहुविउंरे, आंधइं आंधउ धोयु ॥ ६८ ॥ जिणवर जाग न मांडिओरे, पसूअ पांच न होमी । वंभधार न तेडिआहो, ते नर पडिआ भूमी ॥ ६९॥

विविधाधिकारसूक्तानि १२७

अपथ्यसेवको रोगी, सद्द्वेषो हितवादिषु । नीरोगोऽप्यौषधप्राशी, मुमूर्षुर्नात्र संशयः ॥ १ ॥ चारुप्रियोऽन्यदारार्थी, सिद्धेऽन्ने गमनादिकृत् । निःस्वो गोष्ठीरतोऽत्यर्थं, निर्बुद्धीनां शिरोमणिः ॥ २ ॥ विद्वानस्मीतिवाचालः, सोद्यमोऽस्मीति चञ्चलः । शूरोऽस्मीति च निःशङ्कः, स सभायां न राजते ॥ ३ ॥ क्लिष्टोक्त्यापि कविंमन्यः, स्वश्लाघी प्राज्ञपर्षदि । व्याचष्टे चाश्रुतं शास्त्रं, यस्तस्य मतये नमः ॥ ४ ॥ उद्वेजकोऽतिचाटूक्त्या, मर्मस्पर्शी हसन्नपि । निर्गुणो गुणनिन्दाकृत्, क्रकचप्रतिमः पुमान् ॥ ५ ॥ दूतो वाचिकविस्मारी, गीतकारी खरस्वरः । गृहाश्रमरतो योगी, महोद्वेगकरास्त्रयः ॥ ६ ॥ वृद्धिके मान्त्रिका भग्नाः, क्षये भग्ना भिषग्वराः । स्वभावे तार्किका भग्नाः, स्त्रीषु भग्नं जगत्त्रयम् ॥ ७ ॥ अङ्के स्थिताऽपि युवतिः परिरक्षणीया, संसेवितोऽपि नृपतिः परिशङ्कनीयः । शास्त्रं सुनिश्चितधिया परिचिन्तनीयं, शास्त्रे नृपे च युवतौ च कुतो वशत्वम्? ॥ ८ ॥ उपाध्यायश्च वैद्यश्च, प्रतिभूर्भुक्तनापिका । सूतिका दूतिका चैव, सिद्धे कार्ये तृणोपमाः

॥ ९ ॥ वैद्यो गुरुश्च मन्त्री च, यस्य राज्ञः प्रियंवदाः । शरीरधर्मकोशेभ्यः, क्षिप्रं स परिहीयते ॥ १० ॥ लज्जा वारेइ महं
अलंपया भणइ मग्गिरे मग्गि । दिन्नं माणकवाडं देहित्ति न निग्गया वाणी ॥ ११ ॥ उत्तमं प्रणिपातेन, शूरं भेदे नियो-
जयेत् । नीचमल्पप्रदानेन, समशक्तिं पराक्रमैः ॥ १२ ॥ काशी विवर्जयेच्चौर्य, निद्रालुश्चर्मचौरिकां । जिह्वा लौल्यं च
रागाढ्यो, जीवितं योऽत्र वाञ्छति ॥ १३ ॥ अनुचितकर्मारम्भः, स्वजनविरोधो बलीयसा स्पर्द्धा । प्रमदाजनविश्वासो,
मृत्युर्द्वाराणि चत्वारि ॥ १४ ॥ अविनीतो भृत्यजनो, नृपतिरदाता शठानि मित्राणि । अविनयवती च भार्या, मस्तक-
शूलानि चत्वारि ॥ १५ ॥ वैद्यस्तर्कविहीनो, निर्लज्जा कुलवधूर्व्रती पीनः । कटके च प्राघूर्णको, मस्तकशूलानि चत्वारि
॥ १६ ॥ शीतमन्नं सुताजन्म, दुर्वातैर्दूषिता कृषिः । स्वजनैः सह मालिन्यं, स्वादहीनं चतुष्टयम् ॥ १७ ॥ जामाता
कृष्णसर्पश्च, दुर्जनः पावकस्तथा । उपकारैर्न गृह्यन्ते, पञ्चमो भागिनेयकः ॥ १८ ॥ तृणं ब्रह्मविदः स्वर्गस्तृणं शूरस्य
जीवितम् । विरक्तस्य तृणं नारी, निरीहस्य तृणं नृपः ॥ १९ ॥ अजीर्णं तपसः क्रोधो, ज्ञानाजीर्णमहङ्कृतिः । परतप्तिः
क्रियाऽजीर्णमन्नाजीर्णं विसूचिका ॥ २० ॥ उद्यमे नास्ति दारिद्र्यं, जपतो नास्ति पातकम् । मौनेन कलहो नास्ति, नास्ति
जागरतो भयम् ॥ २१ ॥ बलं मूर्खस्य मौनत्वं, तस्करस्यानृतं बलम् । दुर्बलस्य बलं राजा, बालस्य रुदितं बलम् ॥ २२ ॥
शकटं पञ्चहस्तेन, दशहस्तेन वाजिनम् । हस्तिनं शतहस्तेन, देशत्यागेन दुर्जनम् ॥ २३ ॥ आतुरे व्यसने प्राप्ते, दुर्भिक्षे
शत्रुविग्रहे । राजद्वारे श्मशाने च, यस्तिष्ठति स बान्धवः ॥ २४ ॥ आचारः कुलमाख्याति, वपुराख्याति भोजनम् ।
संभ्रमः स्नेहमाख्याति, देशमाख्याति भाषितम् ॥ २५ ॥ ब्राह्मणजातिरद्विष्टो, वणिग्जातिरवञ्चकः । प्रियाजातिर्निरो-

प्यांलुः, शरीरी न निरामयः ॥ २६ ॥ सकृज्जल्पन्ति राजानः, सकृज्जल्पन्ति साधवः । सकृत्कन्याः प्रदीयन्ते, त्रीण्येतानि सकृत्सकृत् ॥ २७ ॥ विग्रहमिच्छन्ति भटा, वैद्याश्च व्याधिपीडितं लोकम् । मृतकवहुलं च विप्राः, क्षेम सुभिक्षं च निर्ग्रन्थाः ॥ २८ ॥ निःस्पृहो नाधिकारी स्यान्नाकामी मण्डनप्रियः । नाविदग्धः प्रियं ब्रूयात्, स्फुटवक्ता न वञ्चकः ॥ २९ ॥ अभ्रच्छाया तृणादग्निः, खले प्रीतिः स्थले जलम् । वेश्यारागः कुमित्रं च, षडेते बुद्बुदोपमाः ॥ ३० ॥ माता यदि विषं दद्यात्पिता विक्रयते सुतम् । राजा हरति सर्वस्वं, का तत्र परिदेवना? ॥ ३१ ॥ आर्त्ता देवान्नमस्यन्ति, तपः कुर्वन्ति रोगिणः । निर्धना विनयं यान्ति, क्षीणदेहाः सुशीलिनः ॥ ३२ ॥ अर्थनाशं मनस्तापं, गृहे दुश्चरितानि च । वञ्चनं चापमानं च, मतिमान्न प्रकाशयेत् ॥ ३३ ॥ दाने तपसि शौर्ये च, विज्ञाने विनये नये । विस्मयो न हि कर्त्तव्यो, वहुरत्ना वसुन्धरा ॥ ३४ ॥ कोकिलानां स्वरो रूपं, नारीरूपं पतिव्रता । विद्या रूपं कुरूपाणां, क्षमा रूपं तपस्विनाम् ॥ ३५ ॥ बालादपि हितं ग्राह्यममेध्यादपि काञ्चनम् । नीचादप्युत्तमां विद्यां, स्त्रीरत्नं दुष्कुलादपि ॥ ३६ ॥ त्यजेदेकं कुलस्यार्थे, ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे, आत्मार्थे पृथिवीं त्यजेत् ॥ ३७ ॥ प्रत्यक्षे गुरवः स्तुत्याः, परोक्षे मित्रबान्धवाः । कर्मान्ते दासभृत्याश्च, पुत्रो (पुत्रा) नैव मृताः स्त्रियः ॥ ३८ ॥ नास्ति कामसमो व्याधिर्नास्ति मोहसमो रिपुः । नास्ति क्रोधसमो वह्निर्नास्ति ज्ञानसमं सुखम् ॥ ३९ ॥ सद्भावो नास्ति वेश्यानां, स्थिरता नास्ति संपदाम् । विवेको नास्ति मूर्खाणां, विनाशो नास्ति कर्मणाम् ॥ ४० ॥ ग्रामो नास्ति कुतः सीमा ?, पत्नी नास्ति कुतः सुतः? । प्रज्ञा नास्ति कुतो विद्या?, धर्मो नास्ति कुतः सुखम्? ॥ ४१ ॥ यत्रोदकं तत्र वसन्ति हंसा, यत्राऽऽमिषं तत्र पतन्ति

गृध्राः । यत्रार्थिनस्तत्र रमन्ति वेश्या, यत्राऽऽकृतिस्तत्र गुणा वसन्ति ॥ ४२ ॥ स्थिरा कीर्त्तिरकीर्त्तिश्च, स्थिरं कर्म शुभाशुभम् । स्थिरं दानं सुपात्रेषु, स्थिरा मैत्री सतां जने ॥ ४३ ॥ त्रयः स्थानं न मुञ्चन्ति, काकाः कापुरुषा मृगाः । अपमाने त्रयो यान्ति, सिंहाः सत्पुरुषा गजाः ॥ ४४ ॥ पूगीफलानि पा(प)त्राणि, राजहंसतुरङ्गमाः । स्थानभ्रष्टाः सुशोभन्ते, सिंहाः सत्पुरुषा गजाः ॥ ४५ ॥ राजा कुलवधूर्विप्रा, नियोगी मन्त्रिणस्तथा । स्थानभ्रष्टा न शोभन्ते, दन्ताः केशा नखा नराः ॥ ४६ ॥ या लोभाद्या परद्रोहाद्यः पात्राद्यः परार्थतः । मैत्री लक्ष्मीर्व्ययः क्लेशः, सा किं सा किं स किं स किम्? ॥ ४७ ॥ अग्निरापः स्त्रियो मूर्खाः, सर्पो राजकुलानि च । नित्यं यत्नेन सेव्यानि, सद्यः प्राणहराणि षट् ॥ ४८ ॥ अग्निर्विप्रो यमो राजा, समुद्रमुदरं गृहम् । सप्तैतानि न पूर्यन्ते, पूर्यमाणानि नित्यशः ॥ ४९ ॥ आयुषो राजचित्तस्य, पिशुनस्य धनस्य च । खलस्नेहस्य देहस्य, नास्ति कालो विकुर्वतः ॥ ५० ॥ दुर्जनानां भुजङ्गानामङ्गनानां च भूभुजाम् । सत्कृतानामपि प्रायो, विश्रब्धव्यं न सर्वथा ॥ ५१ ॥ चित्रकृत्काव्यकर्त्ता च, कुवैद्यः कुनरेश्वरः । चत्वारो नरकं यान्ति, पञ्चमो ग्रामकूटकः ॥ ५२ ॥ धनधान्यप्रयोगेषु, विद्यासंग्रहणेषु च । आहारे च निहारे च, त्यक्तलज्जः सदा भवेत् ॥५३॥ धर्मशोकभयाहारा, निद्रा कामः कलिः क्रुधः । यावन्मात्रा विधीयन्ते, तावन्मात्रा भवन्त्यमी ॥ ५५ ॥ बाल्यं वृद्धिर्वयो मेधा, त्वक्श्रोत्रनेत्रविक्रमाः । दशकेन निवर्त्तन्ते, मनः पञ्चेन्द्रियाणि च ॥ ५५ ॥ आयुष्कर्म च वित्तं च, विद्या निधनमेव च । पञ्चैतानि हि सृज्यन्ते, गर्भस्थस्यैव देहिनः ॥ ५६ ॥ मातुः स्तन्यं रजःक्रीडा, मन्मना वागलज्जता । शैशवे सन्ति निर्हेतुहास्यं भोगः पितुः श्रियः ॥ ५७ ॥ शौर्येण वा तपोभिर्वा, विद्यया वा धनेन वा । अत्यन्तमकुलीनोऽपि,

कुलीनो भवति क्षणात् ॥ ५८ ॥ जानीयात्प्रेषणे भृत्यान्, बान्धवान् व्यसनागमे । मित्रमापदि काले च, भार्यां च विभवक्षये ॥ ५९ ॥ जीवन्तो मृतकाः पञ्च, श्रूयन्ते किल भारते । दरिद्रो व्याधितो मूर्खः, प्रवासी नित्यसेवकः ॥ ६० ॥ धिग्दानमसत्कारं, पौरुषं धिक् कलङ्कितम् । जीवितं मानहीनं धिक्, धिक्कन्यां बहुभाषिणीम् ॥ ६१ ॥ सर्वस्य गात्रस्य शिरः प्रधानं, सर्वेन्द्रियाणां नयनं प्रधानम् । सर्वौषधीनामशनं प्रधानं, सर्वेषु पेयेषु पयः प्रधानम् ॥ ६२ ॥ दानेन पाणिर्न तु कङ्कणेन, मानेन तृप्तिर्न तु भोजनेन । धनेन कान्तिर्न तु चन्दनेन, ध्यानेन मुक्तिर्न तु दर्शनेन ॥ ६३ ॥ श्रीशान्तिनाथादपरो न दानी, दशार्णभद्रादपरो न मानी । श्रीशालिभद्रादपरो न भोगी, श्रीस्थूलभद्रादपरो न योगी ॥ ६४ ॥ अश्वप्लुतं माधवगर्जितं च, स्त्रीणां चरित्रं भवितव्यता च । अवर्षणं चापि च वर्षणं च, देवा न जानन्ति कुतो मनुष्याः? ॥ ६५ ॥ कानीनश्च पितामहः समभवन् पुत्रादयो गोलकाः, संजाताः पृथगन्यतातजनिताः कुण्डा ह्यमी पाण्डवाः । सर्वेण द्रुपदात्मजा सहचरी युद्धे हता बान्धवाः, श्रीकृष्णेन कुलं कलङ्कमलिनं नीतं जगद्वन्द्यताम् ॥ ६६ ॥ शान्तश्चन्द्रश्चन्दनश्चैकजातिर्वीणा नारी मन्मथश्चैकजातिः । अश्वः खड्गः क्षत्रियश्चैकजातिर्मूर्खः काष्ठं गर्दभश्चैकजातिः ॥ ६७ ॥ पुत्रोऽपि मूर्खो विधवा च कन्या, शठं च मित्रं चपलं कलत्रम् । विलासकालेऽपि दरिद्रता च, विनाऽग्निना पञ्च दहन्ति देहं ॥ ६८ ॥ क्षते प्रहाराः प्रपतन्त्यवश्यं, धान्यक्षये स्फूर्जति जाठराग्निः । आपत्सु मित्राणि विसंवदन्ति, छिद्रेष्वनर्था बहुलीभवन्ति ॥ ६९ ॥ अर्थाऽऽतुराणां न सुहृन्न बन्धुः, क्षुधाऽऽतुराणां न वपुर्न तेजः । कामाऽऽतुराणां न भयं न लज्जा, चिन्ताऽऽतुराणां न सुखं न निद्रा ॥ ७० ॥ सुखी न जानाति परस्य दुःखं, न यौवनस्था गणयन्ति शीलम् ।

आपद्गता निष्करुणा भवन्ति, आर्त्ता नरा धर्मपरा भवन्ति ॥ ७१ ॥ सुजीर्णमन्नं सुविचक्षणः सुतः, सुसाधिताास्त्रं नृपतिः
सुसेवितः । सुचिन्त्य चोक्तं सुविचार्य यत्कृतं, सुदीर्घकालेऽपि न यांति विक्रियाम् ॥ ७२ ॥ बालसखित्वमकारणहास्यं,
स्त्रीषु विवादमसज्जनसेवा । गर्दभयानमसंस्कृतवाणी, षट्सु नरो लघुतामुपयाति ॥ ७३ ॥ काके शौचं द्यूतकारेषु सत्यं,
सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः । क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता, राजा मित्रं केन दृष्टं श्रुतं वा? ॥ ७४ ॥ सत्यं चेत्त-
पसा च किं शुचि मनो यद्यस्ति तीर्थेन किं, सद्विद्या यदि किं धनैः सुमहिमा यद्यस्ति किं मण्डनैः? । लोभश्चेदगुणेन
किं पिशुनता यद्यस्ति किं पातकैः, सौजन्यं यदि किं निजैरपयशो यद्यस्ति किं मृत्युना? ॥ ७५ ॥ यद्दारिद्र्यं कृपणज-
नतां प्रीणतः सैव लक्ष्मीर्यन्मर्त्तव्यं शरणमवतां जीवितव्यं तदेव । यद्दारत्वं गुरुजनरुपः स्यात्तदेवातिशौर्यं, यत्स्वाधीनं
कदशनमपि स्वादु पथ्यं तदेव ॥ ७६ ॥ आराधयेद्धर्ममनन्यकर्मा, प्रायः प्रसादावधिरेव सर्वः । आराद्धुमेनं तु कृतप्र-
सादं, कस्यापि विस्फूर्त्तिमियर्त्ति चेतः ॥ ७७ ॥ अर्था नराणां पतिरङ्गनानां, वर्षा नदीनामृतुराट् तरूणाम् । सद्धर्मचारी
नृपतिः प्रजानां, गतं गतं यौवनमानयन्ति ॥ ७८ ॥ यदेकः स्थविरो वेत्ति, न तत्तरुणकोटयः । यो नृपं लत्तया हन्ति,
वृद्धवाक्यात्स पूज्यते ॥ ७९ ॥ अनादरो विलम्बश्च, वैमुख्यं विप्रियं वचः । पश्चात्तापश्च पञ्चामी, सद्दानं दूषयन्ति हि
॥ ८० ॥ आनन्दाश्रूणि रोमाञ्चो, बहुमानं प्रियं वचः । किंचानुमोदना पात्रदानभूषणपञ्चकम् ॥ ८१ ॥

॥ समाप्तोऽयं ग्रन्थः ॥

इति श्रेष्ठि-देवचंद्र-लालभाई-जैनपुस्तकोद्धारे ग्रन्थाङ्कः ५७.

# सुक्तमुक्तावल्यां अकाराद्यनुक्रमः।

| श्लोकाद्यं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| अइतजणा न | ११२ | १२ |
| अकर्तव्यं न कर्तव्यं | ९ | १ |
| अकरे करकर्त्ता च | ११९ | १९ |
| अकलितपरस्वरूपः | ३१ | २८ |
| अकवित्वं परस्ता० | ४९ | १ |
| अकार्ये तथ्ये वा | १२६ | २३ |
| अकारणं सत्त्व० | १९ | १८ |
| अकुलीनःकुलीनः | ५८ | २ |
| अकृतज्ञा असं० | ३३ | ३५ |
| अक्खड अक्खइ | ६८ | १४ |

| श्लोकाद्यं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| अक्खाण रसणी | ९७ | १३ |
| अग्निरापः स्त्रियो मूर्खाः | १२७ | ४८ |
| अग्निर्विप्रो यमो राजा | १२७ | ४९ |
| अघटितघटितानि | १८ | ११ |
| अङ्कमारुह्य सुप्तस्य | २२ | २ |
| अङ्कस्थाने भवेद्धर्मः | ६ | २२ |
| अङ्के स्थिताऽपि | १२७ | ८ |
| अङ्गनानामिवाङ्गानि | २९ | १८ |
| अङ्गं गलितं | ८० | ३ |
| अङ्गुष्ठमानमपि | ६३ | १ |

| श्लोकाद्यं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| अच्छउ दूरे राओ | १२६ | ३१ |
| अच्छिनिमीलणमित्तं | १४ | ३ |
| अजातमृतमूर्खेभ्यः | १२२ | १३ |
| अजानन् माहात्म्यं | १०१ | ९ |
| अजीर्णे तपसः क्रोधो | १२७ | २० |
| अज्ज घरे नत्थि घयं | ९२ | १७ |
| अज्जं कल्लं परं परारि | १६ | १८ |
| अट्ठेव य अट्ठ सया | ६५ | ८ |
| अणंता पावरासीओ | ९९ | २१ |
| अण्वपि गुणाय | ३० | ८ |

| श्लोकार्धं | अधिकाराङ्कः | श्लोकाङ्कः | श्लोकार्धं | अधिकाराङ्कः | श्लोकाङ्कः | श्लोकार्धं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|---|---|---|---|---|---|
| अत एव हि नेच्छन्ति | ३४ | २६ | अत्यालोयणतरला | ४९ | १२ | अधिकाराभिमिः | १२० | १४ |
| अतः सिञ्चन्ति तं | ६ | ३७ | अदत्तदानाच्च भवे० | ८६ | २८ | अधीत्य शास्त्राणि | ५० | ३ |
| अतिकुपिता अपि | २८ | ६ | अदत्तं नादत्ते | ७६ | १ | अधुना धर्त्तं न | ८५ | ३२ |
| अतिथिर्यस्य भग्नाशो | ८६ | ४ | अदातरि समृद्धेऽपि | ८५ | १३ | अधः क्षिपन्ति कृपणा | ८५ | ३ |
| अतिपरिचयादवज्ञा | १२६ | १७ | अदाता पुरुषस्त्यागी | ८५ | ३३ | अनन्तैः पार्थिवैर्मुक्ता | ७८ | ६ |
| अतियत्नगृहीतोऽपि | ३० | १७ | अदृष्टसुखभङ्गस्य | ९१ | ७ | अनध्ययनविद्वांसो | ६१ | १ |
| अतिवाहितमखिलगहनं | १०३ | ५ | अदृष्टे दर्शनोत्कंठा | ३४ | २२ | अनभ्यासे विषं शास्त्रं | ४५ | ११ |
| अतिसंचयकर्तृणां | ८५ | २६ | अद्य प्रक्षालितं गात्रं | ६२ | २१ | अनया रत्नसमृद्धया | ८५ | २५ |
| अतुलसुखनिधानं | ५५ | ९ | अद्य मे फलवती | ६७ | १ | अनर्घ्याण्यपि रत्नानि | ७ | २ |
| अत्तो देवह भत्तो | १११ | ३ | अद्यापि नोज्झति | २४ | ६ | अनवस्थितचित्तानां | १२६ | ४ |
| अत्युग्रपुण्यपापानां | ११ | ५ | अद्यैव हसितं गीतं | १६ | २ | अनार्य्यं भोग्यमप्राप्यं | ११ | १ |
| अत्यम्बुपानाद् | ११८ | १८ | अद्धंसणेण अइ० | ३४ | ३६ | अनादरो विलम्बश्च | ८८ | १७ |
| अत्र द्रोणशतं दग्धं | १७ | ५ | अधना धनमिच्छन्ति | ११४ | ३ | ,, | १२७ | ८० |

| श्लोकार्धं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| धन्यस्योपरि निपतत्य० | ६८ | २९ |
| धन्यानामिह धर्मकर्म० | ३ | ५ |
| धन्या भारतवर्षसंभवि० | ३ | ६ |
| धन्योऽहं मम मन्दिरं | ८९ | १९ |
| धम्मेण कुलप्पसूई | ५ | ४ |
| धरान्तःस्थं तरोर्मूलं | ४ | १ |
| धर्मध्वंसे क्रियालोपे | ७४ | २१ |
| धर्मपराणां पुंसां | १७ | १७ |
| धर्मशोकभयाहार० | ६ | २५ |
| धर्मशोकभयाहारा | १२७ | ५४ |
| धर्मसिद्धौ ध्रुवं सिद्धि० | १ | २२ |
| धर्मस्य फलमिच्छन्ति | ९ | ६ |
| धर्मस्य मूलं पदवी | ८७ | १ |

| श्लोकार्धं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| धर्मज्ञो धर्मकर्त्ता च | ६८ | १ |
| धर्माज्जन्म कुले | ४ | ७ |
| धर्मादधिगतैश्वर्यो | ६ | ११ |
| धर्मार्थकाममोक्षाणां | ६ | १५ |
| धर्मो जगतः सारः | ६ | २० |
| धर्मो महामङ्गल० | ४ | ६ |
| धर्मो यशो नयो दाक्ष्यं | ७५ | ५ |
| धर्मोऽयं धनवल्लभेषु | ४ | ८ |
| धर्मो ध्वस्तदयो | ३७ | २० |
| धर्मः पर्वतगस्तपः | १२ | ३ |
| धर्मः क्षोणिभृतां | ११९ | १३ |
| धवलयति समग्रं | ३३ | १९ |
| धिग्दानमसत्कारं | ११७ | ६१ |

| श्लोकार्धं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| धीवराशङ्किनी नित्यं | ८३ | ३ |
| धुत्ता हुंति सुवच्छला | ३१ | ७ |
| धूमः पयोधरपदं | ३२ | ४ |
| धैर्यं यस्य पिता | १ | १८ |
| ध्वांतं ध्वस्तं समस्तं | १८ | १५ |
| **न** | | |
| न कयं दीणुद्धरणं | ८९ | २ |
| न कश्चिच्चण्डकोपाना० | ११२ | १० |
| न काष्ठे विद्यते देवः | १११ | १५ |
| नखविक्रियां प्रकुरुते | १०० | ८ |
| नमेऽपि शूलिनि | ९७ | ३ |
| न च भोगाश्च त्यागान् | ११९ | ११ |
| न चन्द्रमाः प्रत्युपकार० | ३३ | १३ |

| श्लोकार्धं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| भोगास्तुङ्गतुरङ्ग० | १६ | १३ |
| भोगे रोगभयं सुखे | १०४ | १० |
| भोलो कब्जुगाही | ३१ | ८ |
| भ्रातश्चित्त ! सखे ! | १०३ | ६ |
| **म** | | |
| मङ्गलैः कौतुकैर्योगैः | १७ | ३५ |
| मज्जं विसय कसाया | ८ | १४ |
| मणिर्लुठतु पादाग्रे | १२६ | ९ |
| मतिरप्राप्तविषया | १२६ | २ |
| मत्तेभकुम्भदलने | ९८ | ९ |
| मत्वाऽऽत्मनो बन्ध० | ८२ | १० |
| मदिरातो गुणज्येष्ठा | ९९ | ७ |
| मदिरामदमत्तोऽपि | ८२ | ५ |

| श्लोकार्धं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| मनसा मानसं कर्म | १९ | २० |
| मनसि जरसाभिभूता | ८१ | १ |
| मनसि वचसि काये | २६ | १३ |
| मनोरथरथारूढं | ८० | १२ |
| मन्त्र न मूझी जडी | १२६ | ४६ |
| मन्त्राणां परमेष्ठिमन्त्र० | २ | ८ |
| मन्निन्दया यदि जनः | ११३ | ६ |
| मरणं प्रकृतिः शरीरिणां | १७ | ९ |
| मलिनस्य यथाऽत्यन्तं | ४३ | २ |
| मस्तकस्थायिनं मृत्युं | १६ | १ |
| महता पुण्यपण्येन | १४ | १८ |
| महतामप्यहो दैवा० | ३८ | ७ |
| महतामुदये सन्तो | २७ | १७ |

| श्लोकार्धं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| महतामापदं दृष्ट्वा | २५ | १६ |
| महतां स्थानसङ्गेऽपि | २० | १ |
| महिमानं महीयांसं | ३७ | ९ |
| महीयसापि लाभेन | ७९ | ३ |
| महीशय्या शय्या | ५९ | ७ |
| महुमज्जमंसभेसज्ज | ५७ | ६ |
| माक्षिकाः क्षतमिच्छन्ति | ३० | १२ |
| मा गा इत्यपमङ्गलं | ३४ | ३० |
| माणिणि तित्तड | ९९ | १६ |
| माता पशूनां सुतस० | १२२ | २३ |
| मातापितृसहस्राणि | १०५ | १४ |
| माताप्येका पिताऽप्ये० | ३७ | १८ |
| माता यदि विषं दद्यात् | १२७ | ३१ |

| श्लोकाद्यं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| रहो नास्ति क्षणो | ९९ | ४३ |
| राईसरिसवमित्ताणि | २९ | १७ |
| रागद्वेषौ यदि स्यातां | ९७ | ८ |
| रागादयो हि रिपवः | ९७ | ९ |
| रागी बध्नाति कर्माणि | ९७ | ७ |
| रागोऽयं दोषपोषाय | ९७ | ११ |
| राजदण्डभयात्पापं | ९ | २ |
| राजमातरि देव्यां च | १२० | १० |
| राजा कुलवधूर्विमाः | १२७ | ४६ |
| राजानं तृणतुल्यमेव | ७७ | ४ |
| राजा राक्षसरूपेण | १२ | ७ |
| राज्ञः पत्नी गुरोः पत्नी | १२२ | १८ |
| राज्यच्युतिवल्लभया | ११७ | ५ |
| राज्यमिच्छन्नजित्वा | १०७ | ६ |
| राज्यं निःसचिवं | ६ | ५२ |
| राज्यं यातु श्रियो | ७२ | ७ |
| राज्यं वाजिविभूति० | ४२ | १२ |
| राज्यं सुसंपदो भोगाः | ४ | २ |
| रात्रिर्गमिष्यति | ८० | ६ |
| राधाया वदनादधः | ७ | १६ |
| रासहरडिंभ | १२६ | ४१ |
| राहुः सुधाप्रवृद्धः | १२० | १३ |
| राज्ञि धर्मिणि धर्मिष्ठाः | ११९ | ६ |
| रिक्तपाणिर्न पश्येत | ११९ | ३० |
| रिक्तोऽहमर्थैरिति | १८ | ५ |
| रुचिरकनकधाराः | ६९ | ४ |
| रुदता कुत एव | १७ | १० |
| रुद्रो नमः कविः | १२५ | ४ |
| रूपयौवनसंपन्ना | ४६ | ७ |
| रे कारिल्लि ! हयासे | १२६ | २५ |
| रे कंटालि ! केवली | २७ | ८ |
| रे जिह्वे ! कटुकस्नेहे | ७४ | ११ |
| रे पक्षिन्नागतस्त्वं | ३२ | ७ |
| रेरे यत्रक ! मा रोदीः | ९९ | २६ |
| रे वाहा ! मग्गेण वह | १२६ | २४ |
| रोगं रोगनिदानं | ११८ | ३ |
| **ल** | | |
| लगइ कोहपले० | ११२ | १६ |
| लघुनि लघवः समर्था | २३ | ११ |
| लघुभ्यो मादृशी | २३ | १२ |

| श्लोकाद्यं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| वनकुसुमं कृपणश्रीः | ८५ | ४ |
| वनानि दहतो वह्नेः | २५ | १२ |
| वनेऽपि दोषाः | १७/१०२ | १५/१ |
| वनं मग्नलितो वह्नि० | ३१ | ३३ |
| वने रणे शत्रुजलाग्नि० | ५ | १ |
| वने रविर्विरक्तानां | १२६ | ३४ |
| वन्याशीपंक्तयः | १ | २८ |
| वन्यते पदयन्त्रोऽपि | ८३ | १४ |
| वपुरेव तवाचष्टे | ६१ | २ |
| वपुश्च पर्यंकशयं | ६१ | २ |
| वपुः पवित्रीकुरु | ६६ | १३ |
| वयजरंपर० | २९ | १४ |
| वयसः परिणामेऽपि | ३० | ४ |

| श्लोकाद्यं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| वयोऽनुरूपाः प्रायेण | ५२ | ४ |
| वयं जाता येभ्यः | १७ | ३७ |
| वरमअग्गिंमि पवेसो | ९६ | ५ |
| वरगंधधूवचुक्ख० | ६२ | १ |
| वरपूजया जिनानां | १ | ११ |
| वरमसौ दिवसो | ३४ | २७ |
| वरमेका कला रम्या | ४० | ३ |
| वराकः स कथं नाम | २७ | २६ |
| वरं करीरो मरुमार्ग० | ३३ | ६ |
| वरं कारागृहक्षिप्तो | १२३ | २१ |
| वरं जातो वने वृक्षः | ९१ | ५ |
| वरं दरिद्रोऽपि | ४६ | १० |
| वरं पर्वतदुर्गेषु | ३८ | ६ |

| श्लोकाद्यं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| वरं प्राणपरित्यागो | ३४/११९ | ३५/१ |
| वरं मौनेन नीयन्ते | ७४ | ३ |
| वरं रेणुर्वरं भस्म | ९२ | ३ |
| वरं रङ्ककलत्रत्वं | १२३ | २५ |
| वरं वनं वरं भिक्षा | १२० | ११ |
| वरं वनं व्याघ्रगणैः | ८३ | २० |
| वरं वह्निशिखाः पीताः | ७६ | ३ |
| वरं शृङ्गोत्तुङ्गाद्गुरु० | ९६ | ६ |
| वर्षन् क्षारार्णवेऽप्यब्दो | ८८ | १६ |
| वल्ली नरिंदचित्तं | ९९ | ४५ |
| ववसायफलं विहवो | ८६ | १३ |
| वशैर्वेश्मविभूतयः | ६२ | १२ |
| वसन्त्यरण्येषु चरन्ति | ७१ | १६ |

| श्लोकाद्यं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| संसारे संवसतां | १४ | २० |
| संसारे ह्यविहिणा | ९९ | ४ |
| सद्वृत्तिः श्रेयसी पुंसां | २३ | ४ |
| सम्भानां हि सहस्रं | ७ | ११ |
| सोकाऽपि वन्द्यते लोकैः | ४९ | ३ |
| स्त्रीणामपि वचः काले | १२६ | १५ |
| स्त्रीसङ्गः काममाचष्टे | ५३ | ७ |
| स्त्रैणभूषणमणेः | ८३ | १८ |
| स्थानभ्रंशेन भ्रंशेत | ३५ | ११ |
| स्थाने निवासः सकलं | ५७ | १० |
| स्थानं तीर्थर्षिदेवाना | ५३ | १८ |
| स्थानं त्रिकूटः | १८ | १८ |
| स्थान सर्वस्व दातव्य० | १२६ | ७ |

| श्लोकाद्यं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| स्थाप्यते महतां पङ्क्तौ | ३० | १ |
| स्थिरा कीर्तिरकीर्तिश्च | १२७ | ४३ |
| स्थैर्यं सर्वेषु कार्येषु | ६ | ३२ |
| स्नेहेन भूतिदानेन | ३० | ११ |
| स्पृशन्ति भर्तुः प्रायेण | ३८ | १ |
| स्पर्शोऽमेध्यभुजां | ५३ | १९ |
| स्पृष्ट्वा शत्रुञ्जयं तीर्थं | ६० / ६६ | ८ / ३ |
| स्पृहणीयाः कस्य न ते | २६ | ८ |
| स्फुरत्कोटिगुणं | ६ | २८ |
| स्फुरत्न्युपायाः | १८ | १७ |
| स्फूर्जन्नागेन्द्रमाले | ७० | ४ |
| स्मितेन भावेन | ९९ | ९ |
| स्मृता भवति तापाय | ९९ | २८ |

| श्लोकाद्यं | अधिकाराङ्कः | श्लोकाङ्कः |
|---|---|---|
| स्वच्छंदं छंदवृत्त्या | ११९ | २४ |
| स्वगुणं परदोषं वा | २९ | २ |
| स्वच्छसङ्गो विशेषेण | ३८ | ९ |
| स्वच्छाशयाः प्रकृत्या | २६ | ४ |
| स्वजिह्वा नो वशे यस्य | ७४ | ५ |
| स्वतो न कश्चन | ३६ | ४ |
| स्वप्ने कार्पटिकेन | ७ | १५ |
| स्वप्ने यथाऽयं पुरुषः | १६ | ४ |
| स्वबुद्ध्या धर्मवन्तोऽपि | ८८ | ९ |
| स्वभावो नोपदेशेन | ३९ | १ |
| स्वयं स्वगुणविस्तारा | ३६ | २ |
| स्वर्गच्युतानामिह | ९ | १० |
| स्वर्गस्तस्य गृहाङ्गणं | ६२ | ९ |



॥ इतिश्रीसूक्तमुक्तावल्या अकाराद्यनुक्रमः ॥

## पदेनांकेन च शुद्धं त्रुटितं च.

## पदेनांकेन च शुद्धं त्रुटितं च.

# सूक्तमुक्तावल्या अधिकाराणामनुक्रमः

